

अथश्रीमद्भागवतप्रथमस्कंधचूर्णिकाप्रारभ्यते.

१.

[illegible] पूर्वोक्तसंप्र[illegible]मतः तेषां[illegible] प्रतिवक्तृप्रपञ्चांतवान [illegible]

श्रीगणेशायनमः श्रीकुलदेवतायैनमः श्रीगोपीजनवल्लभायनमः मूकंकरोति वाचालं पंगुंलंघयतेगिरिम् यत्कृपातमहं-
वंदेपरमानंदमाधवम् १ अथार्थभागवतंलिख्यते अथनानापुराणशास्त्रप्रबंधैः कृत्वाचित्तप्रसत्तिमलभमानः तत्रतत्रापरितु
ष्यन् नारदोपदेशतः श्रीमद्भगवद्गुणवर्णनप्रधानं भागवतशास्त्रं प्रारीप्सुर्वेदव्यासः तत्प्रतिपाद्यदेवतानुस्मरणलक्षणं मंगलमाचर
ति जन्माद्यस्ययतोन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् तेनेब्रह्महृदायआदिकवयेमुह्यंतियत्सूरयः तेजोवारिमृदांयथाविनिमयो
यत्रत्रिसर्गोमृषाधाम्नास्वेनसदानिरस्तकुहकंसत्यंपरंधीमहि १ अस्यजगतः जन्मस्थितिनाशाः यतोभवंति तथाकार्याकार्येषुक्र
मशः अन्वयव्यतिरेकाभ्यांयोऽस्ति ततः स्वतः सिद्धज्ञानवान् यः यस्मिन्वेदेसूरयोऽपिमुह्यंति तंवेदंब्रह्मणेमनसैवप्रकाशितवान्
किंच यथातेजोवारिमृदांअन्यस्मिन् अन्यावभासः तेजसिवारिबुद्धिरित्यादि तथाभगवत्स्वरूपेमायागुणसर्गः भूतेंद्रियदेवतारू
पः सत्यः यत्सत्यतयामिथ्यासर्गोऽपिसत्यवत्प्रतीयते किंच स्वतेजसासदानिरस्तंकपटंयस्मिन् एवंभूतोयः सत्यरूपः परमेश्वरः तं
वयंसशिष्याः ध्यायेम १ इदानींश्रोतॄणां भागवतश्रवणप्रवृत्त्यर्थंत्रिकांडविषयेभ्यः सर्वशास्त्रेभ्यः श्रैष्ठ्यमाह धर्मः प्रोज्झितेति
अत्रस्कंदरे श्रीनारायणेनसंक्षेपतः कृते भागवतेनिर्मत्सराणांसतांफलेच्छारहितः परमोधर्मः केवलंईश्वराराधनलक्षणः निरूप्यते
अत्रपरमार्थभूतंवस्तुवेद्यम् किंभूतं वस्तु शिवदम् तापत्रयनाशकंच ननुअन्यशास्त्रसत्वेकिमनेनइतिचेत्परैः शास्त्रैः ईश्वरः वि
लंबेनहृद्यारूढोभवति अत्रतुश्रवणेच्छामात्रेणतत्क्षणादेवावरुध्यते नर्हिइदमेवकुतः सर्वेनशृण्वंति श्रवणेच्छातुपुण्यैर्विनानो
त्पद्यते अतोऽवश्यमिदमेवश्रोतव्यमिति २ अतः सर्वशास्त्रफलरूपमिदमितिपरमादरेणसेव्यमिति आह वेदरूपोयः कल्प-
वृक्षः तस्येदंभागवतनामकंफलम् तत्तुवैकुंठगतं नारदेनानीयमह्यंदत्तम् मयाचशुकमुखेनिहितं तस्माद्भुविशिष्यादिपरं-

श्रीगणेशायनमः श्रीकुलदेवतायैनमः श्रीगोपीजनवल्लभायनमः मूकंकरोतिवाचालंपंगुंलंघयतेगिरिम् यत्कृपातमहं-
वंदेपरमानंदमाधवम् १ अथार्थभागवतंलिख्यते अथनानापुराणशास्त्रप्रबंधैः कृत्वाचित्तप्रसत्तिमलभमानः तत्रतत्रापरितु
ष्यन्नारदोपदेशतः श्रीमद्भगवद्गुणवर्णनप्रधानं भागवतशास्त्रंप्रारीप्सुर्वेदव्यासः तत्प्रतिपाद्यदेवतानुस्मरणलक्षणंमंगलमाचर
ति जन्माद्यस्ययतोन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् तेनेब्रह्महृदायआदिकवयेमुह्यंतियत्सूरयः तेजोवारिमृदांयथाविनिमयो
यत्रत्रिसर्गोमृषाधाम्नास्वेनसदानिरस्तकुहकंसत्यंपरंधीमहि १ अस्यजगतः जन्मस्थितिनाशाः यतोभवंति तथाकार्याकार्येषुक्र
मशः अन्वयव्यतिरेकाभ्यांयोऽस्ति ततः स्वतः सिद्धज्ञानवान् यः यस्मिन्वेदेसूरयोऽपिमुह्यंति तंवेदंब्रह्मणेमनसैवप्रकाशितवान्
किंच यथातेजोवारिमृदांअन्यस्मिन् अन्यावभासः तेजसिवारिबुद्धिरित्यादि तथाभगवत्स्वरूपेमायागुणसर्गः भूतेंद्रियदेवतारू
पः सत्यः यत्सत्यतयामिथ्यासर्गोऽपिसत्यवत्प्रतीयते किंच स्वतेजसासदानिरस्तंकपटंयस्मिन् एवंभूतोयः सत्यरूपः परमेश्वरः तं
वयंसशिष्याः ध्यायेम १ इदानींश्रोतृणां भागवतश्रवणप्रवृत्त्यर्थंत्रिकांडविषयेभ्यः सर्वशास्त्रेभ्यः श्रैष्ठ्यमाह धर्मः प्रोज्झितेति
अत्रस्कंदरे श्रीनारायणेनसंक्षेपतः कृतेभागवतेनिर्मत्सराणांसतांफलेच्छारहितः परमोधर्मः केवलंईश्वराराधनलक्षणः निरूप्यते
अत्रपरमार्थभूतंवस्तुवेद्यम् किंभूतं वस्तुशिवदम् तापत्रयनाशकंच ननुअन्यशास्त्रसत्वेकिमनेनइतिचेत्परैः शास्त्रैः ईश्वरः वि
लंबेनहृद्यारूढोभवति अत्रतुश्रवणेच्छामात्रेणतत्क्षणादेवावरुध्यते तर्हिइदमेवकुतः सर्वेनशृण्वंति श्रवणेच्छातुपुण्यैर्विनानो
त्पद्यते अतोऽवश्यमिदमेवश्रोतव्यमिति २ अतः सर्वशास्त्रफलरूपमिदमितिपरमादरेणसेव्यमिति आह वेदरूपोयः कल्प-
वृक्षः तस्येदंभागवतनामकंफलम् तत्तुवैकुंठगतं नारदेनानीयमह्यंदत्तम् मयाचशुकमुखेनिहितं तस्माद्गुविशिष्यादिपरं-

 

परयाअवतीर्णम् अतोऽपूर्वमेवेदं शास्त्रं अतः अमृतद्रवसंयुतं रसरूपं भागवतं हे रसज्ञाः अतो भक्तिमंतः पुरुषाः मुहुर्मुहुः पिबत
३ एवंश्लोकत्रयेणश्रोतॄनभिमुखीकृत्य भागवतशास्त्रमारभते नैमिषारण्ये विष्णुक्षेत्रे शौनकादयः ऋषयः श्रीहरिप्राप्तये सहस्रसंव
त्सरसाध्यंसत्रं कृतवंतः एकदा ते ऋषयः प्रातर्हुतहुताग्नयः संतः आसीनं रोमहर्षणपुत्रं सूतं सत्कृत्य पप्रच्छुः ऋषय ऊचुः भोसू
त त्वया सेतिहासपुराणानि धर्मशास्त्राणि च यानि व्यासः अन्ये मुनयश्च विदुः तानि सर्वाणि अधीतानि व्याख्यातानि च हे सौम्य तेषांअ
नुग्रहात् तत्सर्वं त्वं वेत्थ यतः स्निग्धस्य शिष्यस्य गुरवः गुह्यमपि ब्रूयुः अतः सर्वज्ञेन त्वया तत्र तत्र शास्त्रे पुंसां श्रेयः यत् निश्चितं तत्
नः वद यतः कलौ जनाः अलसाः अल्पायुषः अल्पबुद्धयश्च श्रोतव्यानि तु बहूनि संति अतः हे साधो अत्र यत् सारं तत् मनीषया उद्धृत्य
नः वद येनात्मा संप्रसीदति किंच हे सूत यदर्थं भगवान् विष्णुः वसुदेवस्य देवक्यां जातः तद्वद तस्य अवतारः भूतानां क्षेमाय यन्ना
म गृणन्नरः संसारान् मुच्यते यन्नाम्नः भयमपि बिभेति यत्पादसंश्रयाः मुनयः दर्शनादेव पुनंति गंगोदकानि तु सेवया पुनंति ए
वंभूतस्य कलिमलापहं यशः शुद्धिकामः को वा न शृणुयात् किंच श्रद्धावतां नः लीलया कलाः दधतः तस्य उदाराणि कर्माणि वद
मत्स्याद्यवतारकथाश्च ब्रूहि वयं तु उत्तमश्लोकस्य विक्रमे न वितृप्यामः यत् शृण्वतां रसज्ञानां पदे पदे स्वादु किंच कपटमानुषः भ
गवान् केशवः बलरामेण सह यानि वीर्याणि कृतवान् तानि वद ननु कर्मव्यग्राणां कुतः श्रवणावकाशः स्यादत आहुः कलिं प्रासंज्ञा
त्वा तद्भयात् विष्णुपदं गंतुकामाः दीर्घसत्रमिषेण हरेः कथायां लब्धावकाशाः वयमत्र उपविष्टाः स्म अस्मिन्समये त्वद्दर्शनं ईश्वरेण सं
पादितम् इति अभिनंदंति अहो दुस्तरं कलिं तर्तुं इच्छतां नः धात्रा त्वं दर्शितः यथा पुंसां समुद्रतरणे नाविकः तद्वत् किंच धर्मरक्ष १
के श्रीकृष्णे अधुना स्वस्वरूपं प्राप्ते सति धर्मः कं प्रति शरणं गतः तं ब्रूहि २३ इति श्रीमद्भागवतचूर्णिकायां प्रथमोऽध्यायः १

व्यासउवाच पूर्वोक्तसंप्रश्नसंहृष्टः सूतः तेषांशौनकादीनांवचः सत्कृत्यप्रतिवक्तुमुपक्रांतवान् तत्रसूतः कथारंभेगुरु नमस्कारपूर्वकंमंगलमाचरति सूतउवाच सन्यस्यगच्छंतंशुकंव्यासः पुत्रेनपुत्र ३ इतियदाआहूतवान् तदाशुक रूपत्वेनसर्वेवृक्षाः उत्तरंददुः एतादृशंसर्वहृदिस्थितंमुनिंआनतोस्मि यः शुकः संसारसमुद्रंतर्तुंइच्छतांपुंसां करुणयाअ ध्यात्मप्रकाशकंवेदसारंगुह्यंश्रीभागवतंआह तंमुनीनांगुरुंशरणंव्रजामि गुरोःऐश्वर्यमुक्त्वापौराणिकान्शिक्षति न रनारायणौसरस्वतींदेवींचनमस्कृत्य संसारतारकंग्रंथंव्यासः उदीरितवान् हेमुनयः लोकमंगलंयथातथाभवद्भिःसम्य क्पृष्टः अहं यतः मनःप्रसादकः कृष्णविषयकः प्रश्नः कृतः सएवपुंसांपरोधर्मः यतः अधोक्षजेभक्तिर्भवति ययात्मासुप्र सीदति भगवतिवासुदेवेप्रयोजितः भक्तियोगः अहैतुकंज्ञानंवैराग्यंचजनयति यः अनुष्ठितोधर्मः भगवत्कथासुप्रीतिंनउ त्पादयेत् तर्हिसः श्रमएव केचन एवमाहुः धर्मस्यफलंअर्थः तस्यकामः तस्यचइंद्रियप्रीतिरिति तत् निराकरोति मोक्षपर्यंत धर्मस्यअर्थः फलंन अर्थस्यनकामः कामस्यनइंद्रियप्रीतिः किंतुजीवनमेव जीवनस्यतुफलंतत्वजिज्ञासाएव ननुकर्मसा ध्योधर्मइति तदेवतत्वविदः तत्वंवदंति किंतत् ब्रह्मेति परमात्मेति भगवानिति शब्द्यतेइतियत् तदेवतत्वंमुनयः भक्त्याहृदि पश्यंति अतः स्वनुष्ठितस्यधर्मस्यफलंहरेः आराधनमेव तस्माद्धेतोः अव्यग्रमनसाभगवान्सदाश्रोतव्यः कीर्तितव्यः ध्येयः पूज्यश्च यस्यध्यानरूपखड्गेनअहंकारग्रंथिंयोगिनः छिंदंति तत्कथायांरतिंकः नकुर्यात् तदेवंतीर्थसेवनादिभिः सत्से वास्यात् तयाकृष्णकथारुचिः कृष्णोपिस्वकथांशृण्वतांहृदिस्थः पापानिधुनोति भागवतसेवयानष्टप्रायेषुअभद्रेषुपुंसः भगवतिनिश्चलाभक्तिः भवति भक्तौसत्यांकामलोभादिभिः अनाविद्धंचेतः सत्वेस्थितंसत् उपशाम्यति ततः ए-

वंमुक्तसंगस्यपुंसःतत्वज्ञानंभवति ततोऽहंकारनाशःततःअसंभावनादिसंशयनाशःततःअनारब्धकर्मफलनाशःएतत्स
र्वंआत्मदर्शनेसति भवति अतःकवयःमुदावासुदेवेभक्तिंकुर्वंति इदानींहरेःश्रेष्ठत्वंदर्शयति प्रकृतेःसत्वादिगुणैर्युक्तःएक
एवईश्वरःस्थित्याद्यर्थंहरिविरिंचिहरेतिसंज्ञाःधत्ते तेषांमध्येवासुदेवादेवनृणांश्रेयांसिभवंति उपाधिवैशिष्ट्येनफलवै
शिष्ट्यंदर्शयति यथाकाष्ठात् धूमःप्रवृत्तिस्वभावःतस्मात् अग्निःएवंतमसःसकाशात् रजोगुणःश्रेष्ठःतस्मात् सत्वगुण-
श्च अतःतत्तद्गुणोपाधीनांश्रैष्ठ्यमुत्तरोत्तरमुक्तम् अतःमुमुक्षवोमुनयःभगवंतंक्षेमायभजंति रजस्तमःप्रकृतयःश्रियैश्वर्य
प्रजेप्सवःसंतःपितृभूतादीन् भजंति वासुदेवपरावेदावासुदेवपरामखाः वासुदेवपरायोगावासुदेवपराःक्रियाः वासुदेव
परंज्ञानंवासुदेवपरंतपः वासुदेवपरोधर्मोवासुदेवपरागतिः एवंभूतोभगवान् आत्ममाययाइदंविश्वंअग्रेससर्ज तस्मिन्
प्रविष्टःसन् गुणवानिवभाति दारुषु अग्निर्यथा तथाहरिः भूतेषुनानेवभाति स्वोत्पादितेषुभूतेषुप्रविष्टःसन् विषयान् भुंक्ते
सएवभगवान् देवतिर्यङ्नरादिषु येस्वस्यलीलावताराःतेषुअनुरक्तःसन् सत्वगुणेनलोकान् पालयति ३४ इतिप्रथमेद्वि
तीयः२ सूतउवाच तस्यअवतारकथाःशृणुत सएवभगवान् आदौपौरुषंरूपंमहदहंकारपंचतन्मात्रैःसंभूतम् एका
दशेंद्रियपंचमहाभूतषोडशकलंलोकसिसृक्षयाजगृहे कोसौभगवान् अंभसिशयानस्ययस्यनाभिपद्मात् ब्रह्माऽभूत् यस्य
विष्णोःअवयवैःसर्वलोकाःकल्पिताः तत् भगवतःविशुद्धंरूपंसहस्रपादोरुभुजाननैरद्भुतम् सहस्रमूर्द्धश्रवणाक्षिनासिकंज्ञा
नदृष्ट्यामुनयःपश्यंति एतद्रूपंनानावताराणांकारणम् यस्यअंशोब्रह्मातस्यअंशोमरीच्यादिःतेनदेवादयःसृज्यंते सएवभगवान् २
सनकादिरूपंकौमारंसर्गंआश्रित्य ब्राह्मणोभूत्वाब्रह्मचर्यव्रतंचचारसप्रथमः द्वितीयंसौकरंवपुः धृत्वारसातलगतांम-

ओ॰५ ब्रह्मादीनाम्

हीं उद्धृतवान् तृतीयं नारदरूपं देवर्षित्वं गृहीत्वा पंचरात्रागमं तंत्रं कृतवान् चतुर्थे धर्मभार्यायां नरनारायणौ भूत्वा दुश्चरं तपश्चचा
र पंचमे कपिलो भूत्वा आसुरिनाम्ने ब्राह्मणाय सांख्यशास्त्रं प्रोवाच षष्ठे अत्रिपत्न्यां अनसूयायां दत्तात्रेयः संभूय प्रल्हादाल
र्कादिभ्यः आत्मविद्यां ऊचिवान् सप्तमे रुचिपत्न्यां आकूत्यां यज्ञो भूत्वा देवगणैः सह स्वायंभुवं मन्वंतरं पालितवान् अष्टमे आ-
ग्नीध्रपुत्रात् नाभेः मेरुदेव्यां ऋषभो भूत्वा पारमहंस्यं वर्त्म अदर्शयत् नवमे ऋषिभिर्याचितः सन् पृथुर्भूत्वा पृथ्वीं दुदोह दश
मे मात्स्यं रूपं धृत्वा चाक्षुषमन्वंतरे मही मय्यां नावि वैवस्वतं मनुं आरोप्य अपात् एकादशे कूर्मो भूत्वा देवासुराणामुदधिं मथ्न
तां सतां मंदराद्रिं पृष्ठे दध्रे द्वादशे धन्वंतरिः सन् आयुर्वेदं प्रकाशितवान् त्रयोदशे मोहिनी रूपं धृत्वा असुरान् वंचयित्वा देवान्
अमृतं अपाययत् चतुर्दशे नृसिंहो भूत्वा नखैः हिरण्यकशिपुं वक्षसि विददार पंचदशे वामनो भूत्वा त्रिपाद भूमियाञ्चा छले
न बलिं वंचयित्वा स्वर्गं इंद्राय ददौ षोडशे परशुरामो भूत्वा एकविंशतिवारं निःक्षत्रां महीं अकरोत् सप्तदशे पराशरात् सत्यव
त्यां व्यासो भूत्वा अल्पप्रज्ञान् पुंसो दृष्ट्वा वेदतरोः शाखाः कृतवान् अष्टादशे दाशरथी रामो भूत्वा समुद्रनिग्रहादीनि कर्माणि कृ
तवान् एकोनविंशे विंशे च वृष्णिषु रामकृष्णौ भूत्वा भुवः भारं अहरत् एकविंशे कलौ संप्रवृत्ते दैत्यमोहनाय बुद्धनामा कीकटे
षु भविष्यति ततः द्वाविंशे कलेः अंते दस्युप्रायेषु राजसु सत्सु विष्णुयशसः ब्राह्मणात् कल्किः भविष्यति हे द्विजाः हरेः असंख्ये
याः अवताराः यथा सरोवरात् सहस्रशः क्षुद्रप्रवाहाः निर्गच्छंति तथा ऋषिमनुदेवमनुपुत्रप्रजापतिप्रभृतयः हरेः अंशाः क
लाश्च स्युः श्रीकृष्णस्तु साक्षात् नारायण एव अथैषां प्रयोजनमाह एते सर्वे यदा दैत्यपीडितं जगत् भवति तदा सुखयंति एतत् भ
गवतः गुह्यं जन्म यः सायं प्रातः पठेत् सः दुःखसंघाद्विमुच्यते एतत् भगवतो रूपं मायागुणैः महदादिभिः ब्रह्मणि अज्ञैः कल्पित

म् यथानभसिमेघौघस्तथा एवंलिंगशरीरमपिजीवोपाधितयाकल्पितमस्ति इमेस्थूलसूक्ष्मेरूपेज्ञानेनयदात्मनिषिद्धे भव-
तःतदाजीवःब्रह्मैवभवति एवंभगवतःजन्मकर्माणिकवयःवर्णयंति सःभगवान्विश्वंप्रविश्यविषयान्गृह्णन्जगत्पालनादि
करोति तस्यजन्मकर्मलीलाःकोपिनवेत्ति यस्तुतत्पादसरोरुहंसर्वभावेनभजते सएवतत्पदवींजानाति अतोभवंतोधन्याःय
तोहरौभक्तिंकुर्वंति इदंवेदतुल्यंभागवतंपुराणंलोकहितायव्यासःकृत्वा स्वपुत्रंशुकंअध्यापयत् सशुकःगंगायांप्रायोपवि
ष्टंऋषिभिःपरिवृतंपरीक्षितंश्रावयामास कृष्णेस्वधामोपगतेधर्मज्ञानादिभिःसह कलौनष्टदृशामेषपुराणार्कोधुनोदितः
तत्रसभायांशुकस्यकीर्तयतःसतःतदनुग्रहात् तत्रअध्यगमम् सोहंयथाअधीतंयथामतियुष्मान्श्रावयिष्यामि ४४ इति
प्रथमेतृतीयः३ व्यासउवाच एवंब्रुवाणंसूतंस्तुत्वाऋषीणांमध्येवृद्धःऋग्वेदीशौनकःउवाच हेसूतसूत यांपुण्यांभा
गवतींकथांशुकःआह तांकथय इयंसंहिताकस्मिन्युगेकस्मिन्देशेकेनहेतुनाप्रवृत्ता केनपुरुषेणप्रेरितोव्यासःइमांसंहि-
तांकृतवान् किंच व्यासपुत्रःमहायोगीशुकःसमदृष्टिःनिरस्तभेदोपिमूढइवप्रतीयते निरस्तभेदत्वंप्रपंचयति नग्नंपुत्रंअ
नुगच्छंतंअनग्नमपिव्यासंदृष्ट्वाजलेक्रीडंत्यःअप्सरसःवस्त्राणिपरिदधुः तद्वीक्ष्यव्यासेपृच्छतिसतिस्त्रियःऊचुःतवस्त्री
पुरुषभेदोस्ति सुतस्यतुनास्ति एवंभूतःशुकःकुरुजांगलदेशानतिक्रम्यपौरैःउन्मत्तमूकजडवत्ज्ञातःसन्गजाह्वयंप्राप्तःयः
गृहमेधिनांगृहेषुआश्रमंपवित्रीकुर्वन्गोदोहनकालंप्रतीक्षते तेनसहकथंपरीक्षितःसंवादोभूत् किंच तस्यपरीक्षितःजन्मक
र्माणिचनःकथय अपिचसःपरीक्षित्राज्यलक्ष्मींत्यक्त्वाकस्यहेतोःगंगायांप्रायोपविष्टःशत्रवःधनादीन्दत्वायत्पादंनमंति सराजा ३
भागवतःसन् परोपकारकंशरीरंनिर्विद्यकुतोमुमोच तत्सर्वंनःकथय यतःवेदंविनासर्वशास्त्रविदंत्वांमन्ये सूतउवाच तृती

येऽष्टुगपर्यये द्वापरे पराशरात् वासव्यांहरेः अंशःव्यासोजातः सःएकदासूर्योदये एकांतेआसीनः सन् सरस्वत्याःजलंउपस्पृश्यज्ञान-
चक्षुषायुगधर्मसंकरं प्रजानां शक्तिन्हासंभक्तिहीनान् मंदभाग्यान् अल्पायुषःमंदबुद्धीन् जनांश्ववीक्ष्य सर्वेषांहितंकथंस्यात् इति
दध्यौ एवंविचार्य यज्ञसंतत्यै एकंवेदं चतुर्धाव्यभजत् तथाहि ऋग्यजुःसामाथर्वाख्या वेदाश्चत्वारउद्धृताः इतिहासपुराणंचपं
चमोवेदउच्यते तत्रऋग्वेदधरःपैलमुनिः सामगोजैमिनिः वैशंपायनोयजुर्वेदी आथर्वणःस्रुमंतुः इतिहासपुराणानां ज्ञाता मम
पितारोमहर्षणः तेचपैलादयः स्वंस्वंवेदं अनेकधाविभक्तवंतः शिष्यादिभेदेन तेवेदाःशाखावंतः अभवन् श्रुत्यनधिकारिणांस्त्री
शूद्रादीनांश्रेयसेकृपालुः व्यासःभारताख्यानंकृतवान् तथापि सर्वहिताय प्रवृत्तस्य व्यासस्यहृदयंनातुष्यत् तदाअप्रसन्नमनाः
व्यासःसरस्वतीतीरे इदंप्रोवाच मयावेदाश्चगुरवश्चअग्नयश्चमानिताः तेषामाज्ञाचपालिताभारतमिषेणवेदार्थोपिदर्शितः त
थापिमेजीवः असंपन्नइवाभाति असंपन्नत्वेहेतुं स्वयमेवशंकते परमहंसधर्माः भगवत्प्रियाः तेमयाबहुशःनवर्णिताःकिम् एवं
न्यूनं आत्मानंमन्यमानस्य व्यासस्यसरस्वतीतीरस्थं आश्रमंनारदोगात् तमभिज्ञाय सहसाप्रत्युत्थायागतंमुनिः पूजयामासवि
धिवन्नारदंसुरपूजितम् ३२ इतिप्रथमेचतुर्थः ४ सूतउवाच अथवीणापाणिःनारदःसुखमासीनःसन् समीपेआसी
नंव्यासंआह नारदउवाच हेमहाभागव्यासमुनेतवआत्माअनेनशरीरेणमनसाचतुष्यतिकिम् नोवाज्ञातुमिष्टं यद्धर्मादिनं
सर्वंत्वयाज्ञातंअनुष्ठितंच सर्वार्थपरिपूर्णंभारतंचकृतम् किंच यत् नित्यंब्रह्मतत् विचारितंप्राप्तंच एवंसति अपूर्णइवकथंशो
चसि व्यासउवाच हेनारदत्वयोक्तंसर्वंअस्त्येव तथापिमेआत्मानतुष्यति अतःअसंतोषस्यकारणंत्वांपृच्छाम यतःत्वयापु
राणपुरुषःउपासितःकिंच त्रिलोकांवायुरिवसर्वप्राणिनांअंतश्चरसि अतःमेन्यूनंयत् तत् विचक्ष्व नारदउवा० त्वयाकेवलंभ

ओ० १ सत्यवत्यां·

गवद्यशः अनुक्रमप्रायं तदेव असंतोषे कारणं अहं मन्ये किंच यथा धर्मादयोऽर्थाः वर्णिताः तथा भगवन्महिमा न वर्णितः किंच हरेः यशः
प्रतियद्वचः न गृणीत ननु वचः वायसं तीर्थं मन्यंते प्रतिश्लोकं अपशब्दयुक्तेपि वाचः प्रयोगे भगवद्यशः अस्ति चेत् स एव वाग्विसर्गः त
मेव साधवः शृण्वंति गायंति गृणंति च किंच नैष्कर्म्यमपि ज्ञानं भक्तिहीनं चेत् अत्यर्थं न शोभते कुतः पुनः ईश्वरे न अर्पितं दुःखरूपं का-
म्यं कर्म शोभेत अतः हे महाभाग त्वं यथार्थधीः असि तस्मात् अखिलस्य बंधमुक्तये भगवल्लीलां चित्ते कार्त्स्न्येण स्मृत्वा वर्णय अन्यथा
हरिचेष्टितात् पृथक् दृशः पुंसः मतिः क्वापि विषये स्थानं न लभेत यथा वातेन आहता नौः तद्वत् किंच भारतादिषु काम्ये कर्मणि स्वभावेन
आसक्तस्य पुंसः धर्मार्थं तदेव काम्यकर्मादि कथयतः तव महान् अन्यायः यतः त्वदुक्तं धर्म इति मन्वानो जनः तत्वज्ञेन त्वया वाक्यस्य
तं निवारणं न मन्यते विचक्षणः पुरुषस्तु कर्मनिवृत्त्या भगवत्स्वरूपं ज्ञातुं अर्हति न प्रवृत्तिस्तु भाववान् अत एव गुणैः प्रवर्तमानस्य जन
स्य हरेश्चेष्टितं दर्शय किंच स्वधर्मं त्यक्त्वा हरेश्चरणांबुजं भजन् सन् यत्र कुत्रापि पतेत् चेत् तर्हि किं तस्य अभद्रं स्यात् न अभजतां पुं-
सां स्वधर्मतः को वा अर्थः प्राप्तः न कोपि अत एव निपुणः सन् भक्त्यर्थमेव यतेत विषयसुखं तु दुःखवत् अयत्नसिद्धमेव उत च हे ब्र
स मुकुंदसेवी जनः संसृतिं न प्राप्नोति अतः प्राधान्येन भगवल्लीलां वर्णय कोसौ भगवान् यतो विश्वस्य स्थित्यादयो भवंति सः त्वद्धि
स्वयमेव भगवान् वेद यतः परमात्मनः त्वमंशोसि तथापि आचार्यवान् पुरुषो वेदेति श्रुत्यर्थदिग्दर्शिना तस्मात् हरेर्विक्रमो गण्यतां
इदं सर्वानुष्ठानस्य उत्तमं फलं स्ववृत्तांतेन तदेवाह हे मुने अहं प्राग्जन्मनि वेदवादिनां दास्याः पुत्रः अभवम् ततः प्रावृषि एकत्र वासं
कर्तुमिच्छतां योगिनां शुश्रूषणे योजितः ते योगिनः बालके मयि कृपां चक्रुः तैः उच्छिष्टभोजने अनुज्ञातः तेन भोजनेन निष्पापो जातोऽ ४
हम् एवं प्रवृत्तस्य मे तद्धर्मे रुचिर्जाता तेषां कृष्णकथाः गायतां अनुग्रहेण मम कृष्णे भक्तिः मतिश्च अभवत् यया मत्या ब्रह्मरूपे मयि

इदं मायाकल्पितं पश्यामि इत्थं हरेः यशः त्रिकालं शृण्वतः मे रजस्तमोपहा भक्तिर्जाता एवं बालस्य श्रद्दधानस्य मम ततः स्थानात् गंतु मिच्छंतः ऋषयः भगवदुक्तं गुह्यं ज्ञानं कृपया उपादिष्टवंतः येन ज्ञानेन अहं भगवन्मायानुभावं अविदम् एतत्सत्वशोधकं कर्म यत् भगवति समर्पितं तत् ते सूचितम् यथा रोगजनकं द्रव्यं द्रव्यांतरमिश्रितं सत् रोगनाशकं भवति एवं कर्मापि भगवदर्पितं सत् कर्मनाशाय भवति अपिच भगवत्तोषकारकं कर्म यत् क्रियते तत् भक्तियोगयुक्तं ज्ञानं जनयति यदा भगवच्छिक्षया कर्माणि कुर्वंति तदा श्रीकृष्णस्य गुणनामानि गृणंति स्मरंतिच भक्तिहेतुत्वमुक्त्वा ज्ञानहेतुत्वमाह नमो भगवते तुभ्यं वासुदेवाय धीमहि प्रद्युम्नायानिरुद्धाय नमः संकर्षणायच इति जपतः पुंसः सम्यक् ज्ञानं जायते एवं मया स्वोपदेशं आचरितं ज्ञात्वा केशवः मह्यं ज्ञानं भावंच अदात् हे व्यास विभोः यशः कथय येन श्रुतेन विदुषां बोद्धुं इच्छा समाप्यते यतो दुःखशांतिः प्रकारांतरेण न भवति ४० इति प्रथमे पंचमः ५ सूतउवाच एवं नारदस्य जन्मादि निशम्य व्यासः पप्रच्छ व्यासउवाच भिक्षुषु गतेषु सत्सु त्वं बालकः सन् किमकार्षीः हे नारद शेषं वयः कया वृत्त्यानीतम् कालेन त्वच्छरीरं कथं त्यक्तं कथं वा ते प्राग्जन्मस्मृतिं सर्वविनाशकः कालः न खंडितवान्

नारदउवाच ममविज्ञानादेष्टृभिर्भिक्षुभिः गमने कृते सति आद्ये वयसि वर्तमानोहं एतदकारषं मे माता अज्ञा मयि स्नेहं कृत्वा मम क्षेमं इच्छती सती असमर्था आसीत् अहं च पंचहायनः बालः तेषां आश्रमे आसं ततः एकदा मे माता गोदोहनार्थं बहिर्गता सती सर्पेण दष्टा ततो मृता ततः हरेः स एव अनुग्रह इति मन्यमानः अहं उत्तरां दिशं अगच्छं तत्र जनपदपुरग्रामव्रजाकरखेटवाटीवनोपवनानि चित्रधातुविचित्राद्रीन् शिवजलान् सरोवरादीन् अतीत्य नलवेणुशरस्तंबादिभिः व्यालोलूकशिवाभिश्च घोरं वनं एक एवाहं बुभुक्षितः सन् विविशे ततः तत्र नद्यां स्नात्वा जलं च पीत्वा पिप्पलमूले स्थितः सन् मनसि आत्मा-

नमर्चिंतयम् एवंध्यायतःमेहृदिहरिःआविर्बभूव ततःआनंदमग्नःसन् आत्मानं परंचनापश्यम् ततःभगवतःतद्रूपंपश्य-
न्सन् सहसाउत्थितोस्मि पुनःतद्रूपंपश्यमानोऽपिनापश्यम् एवंवनेयततंमांआकाशवाक् आह अस्मिन्जन्मनिमांद्रष्टुं-
नार्हसि तेमयिप्रीतयेइदंरूपंसकृद्दर्शितम् सत्सेवयानवमयिदृढामतिर्जाता किंच इमंदेहंहित्वामत्पार्षदोभविष्यसि मदनुग्र-
हात् तेस्मृतिःप्रलयेपिननंक्ष्यति इदंउक्त्वा अंतर्हितःतस्मैनमोविदधे ततःअहंतंध्यायन् गांपर्यटन् कालंप्रतीक्षमाणःआसम् त
तःकालेमृत्युकालःप्रादुरभूत् ततोमद्देहःअपतत् कल्पांतेशिशयिषोःब्रह्मणःमध्यंतच्छ्वासेनसह अहंप्राविशम् पुनःकल्पादौइ
दंस्त्रष्टुमिच्छतःब्रह्मणःप्राणेभ्यःमरीच्यादयोऋषयः अहंचजातःसोहंश्रीहरेरनुग्रहात् क्वचिदपिअकुंठगतिःसन् देवदत्तांवीणां
वादयन् हरिकथांगायमानःब्रह्मांडंभ्रमामि एवंगायतःममहृदि भगवान् आहूतइवदर्शनंयाति विषयिणांसंसारसिंधुतरणेह-
रिभजनमेवप्लवः दृष्टःकिंच हरिसेवयायथामनःशाम्यति तथायमादिभिर्न हेव्यासत्वयायत्पृष्टंतत्सर्वं व्याख्यातम् सूतउ
वाच एवमाभाष्यवीणांरणयन् नारदोययौ अहो अयंदेवर्षिःधन्यःयतःवीणयाहरेःकीर्तिंगायन् आतुरंजगत् रमयति ३९ इ
तिप्रथमेषष्ठः६ शौनकउवाच नारदेगतेसति व्यासःकिमकरोत् सूतउवाच सरस्वत्याःपश्चिमेतटेस्वेशम्याप्रासे
आश्रमेव्यासःआचम्योपविष्टःसन् मनःदध्यौ ततःमनसिप्रथमंपुरुषंतन्मायांच अपश्यत् ययामोहितोजीवःअनर्थंप्राप्नोति
ततःअधोक्षजेभक्तियोगंच अपश्यत् एतत् सर्वंदृष्ट्वा एवंअजानतःलोकस्यहिताय भागवतींसंहितांचक्रे यस्यांवैश्रूयमाणायां
कृष्णेपरमपूरुषे भक्तिरुत्पद्यतेपुंसःशोकमोहजरापहा एवंसंहितांकृत्वाशुकंअध्यापयामास शौनकउवाच हेसूतसः
शुकःसर्वत्रोपेक्षकःआत्मारामोपिइमांबृहतींसंहितांकस्यहेतोःअभ्यसत् सूतउवाच आत्मारामाअपिमुनयःहरौभक्तिंकुर्वं-

औ॰४ स्थिरीचकार॰

ति यतः हरिः एवंप्रभावः अत एव हरेर्गुणाकृष्टमतिः शुकः महदाख्यानं इदं अधीतवान् अथ हे शौनक परीक्षितः जन्मकर्म मुक्तिं च पांडवा-
नां महाप्रस्थानं च कृष्णकथोदयं यथास्यात्तथा वक्ष्ये यदा युद्धे कौरव पांडवानां वीरेषु स्वर्गतेषु भीमगदया भग्नोरौ दुर्योधने सति तस्यप्रि
यं कुर्वन्नश्वत्थामा निंद्यमपि कर्म अकृत तथाहि शयानानां द्रौपदी पुत्राणां शिरांसि उपाहरत् तच्छ्रुत्वा शोकेन रुदंतीं द्रौपदीं सांत्वयन् अ
र्जुन आह हे भद्रे अहं यदा अश्वत्थाम्नः शिरः बाणैः हरिष्ये तदा ते शोकाश्रूणि मार्जयामि इत्युक्त्वा कृष्णेन सह रथं आरुह्य तं द्रौणिं अन्व
धावत् तदा दूरात् आगच्छंतमर्जुनं दृष्ट्वा प्राणपरीप्सुरश्वत्थामा प्राद्रवत् यदा स्वरक्षकः अन्यो नास्तीति ऐक्षत तदा स्वरक्षणकर्तृ ब्र
ह्मास्त्रमेवेति मेने अथ आचम्य प्राणसंकटे प्राप्ते सति अस्त्रोपसंहारं अजानन्नपि ब्रह्मास्त्रं संदधे ततः तत्तेजः प्रेक्ष्य सभयः अर्जु
नः श्रीकृष्णं आह अर्जुन उवाच हे कृष्ण कृष्ण त्वं भक्तानां अभयंकरः प्रकृतेः परः सर्वेषां हितकर्तासि अयं ते अवतारः भुवो भा
रजिहीर्षया स्वभक्तानां अनुध्यानाय चास्ति अतः सर्वतो मुखं दारुणं तेजः इदं किं कुतो वा आयाति तत् अहं न वेद्मि अतस्त्वं वद श्री
भगवानुवाच हे अर्जुन अश्वत्थाम्नः इदं ब्रह्मास्त्रं विद्धि एतद्विघातकमन्यत् अस्त्रं नास्ति अतः ब्रह्मास्त्रेणैव इदं घातय सू
त उवाच अर्जुनः भगवदुक्तं श्रुत्वा आचम्य ब्राह्मं ब्राह्माय संदधे ततः तयोस्तेजसी संहत्य आकाशं भूमिं चावृत्य ववृधाते ततः
तत्तेजसा दह्यमानाः प्रजाः प्रलयं मेनिरे तदा प्रजानाशं दृष्ट्वा श्रीकृष्णमतं च ज्ञात्वा अर्जुनः अस्त्रद्वयं संजहार ततः क्रुद्धोऽर्जुनः र
शनया पशुमिव तं बध्वा ततः स्वशिबिरं प्रति नेतुमिच्छंतं अर्जुनं भगवानाह हे पार्थ असौ यतः सुप्तान् बालान् अवधीत् अतः
एनं जहि यतः मत्तं प्रमत्तमुन्मत्तं सुप्तं बालं स्त्रियं जडम् शरणागतं विरथं भीतं रिपुमपि धर्मवित् न हंति किंच यः परप्राणैः स्वप्रा
णान् पुष्णाति तस्य वधः तस्यैव श्रेयः यतः तद्दोषेण नरकं याति त्वया च अस्य शिरो हरामीति द्रौपद्यै प्रतिश्रुतं अतः असौ पा

पोवध्यताम् एवंकृष्णेनचोदितोप्यर्जुनः द्रौणिंहंतुंनैच्छत् अथस्वशिबिरं एत्यशोचंत्यैद्रौपद्यैतंद्रौणिंन्यवेदयत् तदाद्रौपदीत
था आनीतंअश्वत्थामानंदृष्ट्वाप्रणम्य एषःमुच्यतांमुच्यतामितिआह किंच यतःत्वयाअस्यपितुःसकाशादस्त्रग्रामःशिक्षितः
सएवद्रोणःप्रजारूपेणास्ते तस्यस्त्रीकृपीआस्ते यतःवीरसुतःतत् गुरोःकुलंपूज्यंदुःखयितुंनार्हसि अपिच यथाअहंमृतवत्सा
तीरोदिमि तथास्यमाताकृपीमारोदीत् यैराजभिःब्रह्मकुलंकोपितंतत् तेषांसानुबंधंकुलंदहति सूतउवाच एवंधर्म्यंन्या
य्यंचतस्याःवचःश्रुत्वाधर्मादयःश्रीकृष्णश्चतांप्रशशंसुः ततःक्रुद्धोभीमआह अहोअनेनव्यर्थंबालवधःकृतः अतोऽस्यवधए
वश्रेयानितिभीमस्यद्रौपद्याश्चवचनंश्रुत्वाअर्जुनस्यमुखंआलोक्यश्रीकृष्णआह श्रीकृष्णउवाच हेअर्जुनवधार्होपि
ब्राह्मणोनहंतव्यइतिमयैवकथितंतत्त्वमतिपालय उतत्वस्वप्रतिज्ञांमम पांचाल्याःभीमसेनस्यचप्रियंयथातथाकुरु सूतउ
वाच अर्जुनःभगवदभिप्रायंज्ञात्वाअश्वत्थाम्नःसकेशंशिरोगतंमणिंजहार ततोबद्धंअश्वत्थामानंमुक्त्वातेजोहीनंतंशिबि
रात् निःसारितवान् वपनंद्रविणादानंस्थानान्निर्यापणंतथा ब्राह्मणाधमानांअयमेववधःनदैहिकइति ततःपांडवाःद्रौपद्या
सह शोकार्ताः संतःमृतबालानांऔर्ध्वदैहिकंचक्रुः ५८ इतिप्रथमेसप्तमः ७ सूतउवाच अथतेपांडवाःस्त्रियःपुरस्कृत्य
मृतानांउदकदानार्थंकृष्णेनसहगंगांजग्मुः ततःउदकंदत्वाविलापंचकृत्वास्नात्वाचस्थितवंतः तत्रधृतराष्ट्रंगांधारींद्रौपदींपृथांभी
मादिसहितंयुधिष्ठिरंचऋषिभिःसहकृष्णःकालस्यचगतिंदर्शयन् सांत्वयामास ततोऽसतोनृपान् घातयित्वायुधिष्ठिरस्यरा-
ज्यंसंसाध्यत्रिभिरश्वमेधैर्धर्मराजंयाजयित्वातद्यशःशतमन्युरिवदिक्षुविस्तार्यपांडवान् पृष्ट्वाउद्धवसात्यकियुतःद्वैपायनादि ६
भिःपूजितश्चश्रीकृष्णःद्वारकांगंतुंरथमारुरोह एतस्मिन्नवसरेधावंतीउत्तराभीतासतीआह हेकृष्णकृष्णमांपाहि अयंतसा

यसइवशरः मांदग्धुं अभियाति सतुमांकामंदहतु परंमेगर्भोमापततु सूतउवाच इतितस्यादीनंवचःश्रुत्वा इदंद्रौणेःअ
स्त्रंअपांडवंभूतलंकर्तुंप्राप्तमितिज्ञातवान् तदैवपांडवाःस्वोपरिआपततः पंचशरान् आलक्ष्य अस्त्राणि आददुः भक्तवत्सलः
श्रीकृष्णः स्वानांतेषांसंकटंवीक्ष्य स्वदर्शनेनतद्रक्षामकरोत् कुरुवंशवृद्ध्यर्थंस्वमाययाउत्तरायाःगर्भंआवृणोत् हेशौनक ब्रह्मा
स्त्रंअमोघमपितत् विष्णुतेजसा शांतिंअगमत् एतत्सृष्ट्यादिकर्तरिश्रीकृष्णे आश्चर्यंन ततः ब्रह्मास्त्रविनिर्मुक्तैः पांडवादिभिः
सहकुंतीप्रयाणाभिमुखंकृष्णंस्तौति कुंत्युवाच हेभगवन् ईश्वरं अव्ययं योगिनामपिदुर्ज्ञेयंत्वांनमस्ये कृष्णायवासुदेवा
यदेवकीनंदनायच नंदगोपकुमाराय गोविंदायनमोनमः हेभगवन् यथाकंसेनरुद्धादेवकीत्वयासकृद्विमोचिता तथाअहंन
किंतु पांडवैः सहदुःखात् मुहुर्मुहुर्विमोचिता तथाहि विषात् अग्नेःराक्षसेभ्यः वनवासतश्च वयंरक्षिताः हेजगद्गुरो नःशश्वत्
विपदः संतु यतः तासुभवतोदर्शनंभवति किंच श्रियादिभिः गर्वितः पुमान् त्वांकृष्णइतिवक्तुंनार्हति एवंभूतनिष्किंचनवित्ताय
तेनमः हेकृष्णत्वां अनादिनिधनंकालंमन्ये किंच तवईहितंकोपिनवेत्ति एवंभूतस्यतवतिर्यगादिषुयत् जन्मतत् विडंबनमात्र-
म् किंच यशोदयादाम्नाबद्धस्य अधोमुखंकुर्वतः तवयादशासामांमोहयति अपिचप्रियस्ययदुवंशस्यकीर्तयेनकुलेत्वंजा
तइति केचित् आहुः अन्येतु विश्वस्य क्षेमायजातइत्याहुः अपरेभूभारहरणायजातइतिवदंति किंच इतरेतु अस्मिन् संसारेक्लि
ष्टानांजनानामविद्यानिवृत्तयेश्रवणस्मरणाद्यर्हाणिकर्माणिकुर्वन् जातइति एवंभूतस्यतेचरितंयेशृण्वंतिगायंतिच तेसंसार
नाशकंत्वदीयंपादपद्मंपश्यंति किंच हेभक्तपालक नःसुहृदः अद्यत्यजसिकिं यतः त्वत्पदांबुजात् विना अन्यआश्रयोनास्ति अ
पिच यदात्वंअस्मान्नपश्यसि तदामद्युत्राःभूराअपिअतितुच्छाएव किंच इयंभूः त्वत्पदैःअंकिता इदानीं यथाभातितथात्वयि

निर्गतेसतिनशोभिष्येत अपिच इमेदेशसमुद्रादयः तववीक्षणादेधंते अथहेविश्वेश यादवेषु पांडवेषुच मेस्नेह पाशंछिंधि उतच
त्वयिमेमतिः अखंडांप्रीतिंकरोतु हेकृष्णहे विंद योगेश्वरतेनमोऽस्तु सूतउवाच हेशौनकएवंकुंत्यास्तुतः वैकुंठः मंदंजहास
ततःकुंत्युक्तंस्वीकृत्यरथस्थानात् पुनःगजाह्वयंप्रविश्यसुभद्रादिस्त्रियः अनुज्ञाप्यचयास्यन् सन् धर्मेणनिवारितः ततःअथे
तिकथांतरं व्यासाद्यैः कृष्णेनच बोधितोपि शोकयुक्तोधर्मः विवेकं न प्राप किंच हेविप्राः सुहृद्वधंचिंतयन् मोहंप्राप्तः धर्मःआह
अहोहृदिरूढं मम अज्ञानं पश्यत किंनतु श्वादिभक्ष्यदेहस्यार्थे मयाऽक्षौहिण्योहताः अपिच बालगुर्वादिद्रुहः मेनरकात्
बहुवत्सरैरपि मोक्षोनस्यात् किंच युद्धे द्विषांवधः पापंनेतियत् शास्त्रंतद्राजाभर्तुरेव मयातुकेवलं राज्यलोभेन इमेहताः अ
तःपापमेवेदम् अन्यच्च मद्धतपतीनांस्त्रीणां यःद्रोहःउत्पन्नः तन्नाशयितुंगृहस्थकर्मभिः अहंसमर्थोन किंच यथामद्यले
शकृतं अपावित्र्यंबहुमद्येन शुद्धंनभवति एवंएकामपिभूतहत्यांहिंसाप्रायैः यज्ञैः मार्ष्टुंनार्हतीति ५२ इतिप्रथमेअष्टमः
८ सूतउवाच एवंप्रजाद्रोहात् भीतःधर्मः यत्र भीष्मः अपतत् तस्मिन्कुरुक्षेत्रेधर्मजिज्ञासयाऽगमत्तदासर्वे भ्रातरः त
थाव्यासादयः भगवानपितंअन्वगच्छत् ततःभूमौपतितंभीष्मंदृष्ट्वा भगवतासहसर्वेपांडवाःप्रणेमुःतदादेवर्षयोब्रह्मर्षयोराजर्षयश्चतथा
पर्वतोनारदोधौम्योव्यासः बृहदश्वाभरद्वाजःपरशुरामः वसिष्ठः इंद्रप्रमदः त्रितःगृत्समदः कक्षीवान् गौतमः अत्रिः कौशिकः कश्य
पः शुकः अन्येच ऋषयः शिष्यैः सह भीष्मंद्रष्टुंआगताः तान्प्रतिशरशल्पस्थः भीष्मःपूजयामास समीपस्थंश्रीकृष्णंचवचसापू
जयत् ततःसमीपेआसीनान् पांडवान् अपश्यत् आहच हेपांडवाः यूयंकष्टेनजीवितुंनार्हथ यतःयूयंविप्रधर्माच्युताश्रयाः स्थ पां
डौमृतेकुंतीयुष्मत्कृते बहून् क्लेशान् प्राप्ता भवतांचदुःखंजातम् तत् सर्वंकालकृतमित्यहंमन्ये अतः अयंलोकः कालाधीनो
ऑ॰२ विप्राः धर्मः अच्युतश्च आश्रयोयेषांते

स्ति अहो यत्र धर्मसुतो राजा गदापाणिर्वृकोदरः कृष्णो॰ऽस्त्री गांडिवं चापं सुहृत् कृष्णस्ततो विपत् तस्मादिदं दैवाधीनं मन्ये अतः
त्वं कृष्णानुवर्ती सन् प्रजाः पाहि एषः श्रीकृष्णः मायया लोकं मोहयन् गूढः यदुषु चरति अस्य प्रभावं शिवादयो विदुः यं प्रति त्वं मा
तुलेयं मित्रं सचिवं सारथिं चेति मन्यसे तस्य समदृशः ईश्वरस्य नीचोच्चकर्मकृतं मतिवैषम्यं क्वापि नास्ति तथापि एकांतभक्तेषु न
स्य दयां पश्य एवंभूतः भगवान् प्राणत्यागं कुर्वतो मे दर्शनं आगतः यस्मिन् अच्युते मनः स्थाप्य वाचा तन्नामकीर्तयन् यः योगी
कलेवरं त्यजति सः कर्मभिः मुच्यते अतः सः भगवान् यावदहं इदं कलेवरं त्यजामि तावत्प्रतीक्षताम् सूत उवाच एवं भी-
ष्मवचः श्रुत्वा युधिष्ठिरः शरपंजरस्थं तं राजदानमोक्षरूपी भगवद्धर्मान् धर्मार्थकाममोक्षांश्च अपृच्छत् ततः इतिहासोक्तध-
र्मान् कथयतः सतः भीष्मस्य योयोगिनां इष्टः सः उत्तरायणः कालः प्राप्तः तदा वाचं नियम्य निःसंगं मनः पुरःस्थिते कृष्णे व्यधारय
त् भगवद्दर्शनात् गतायुधश्रमः स्वशरीरं मुंचन् कृष्णं तुष्टाव भीष्म उवाच अहो सात्वतश्रेष्ठे भगवति निष्कामा मतिः म
या अर्पिता किंच त्रिभुवनसुंदरं नीलपीतांबरयुतं अलकावृताननाब्जं वपुः दधाने अर्जुनसारथौ भगवति मे रतिरस्तु किंच यु
धि मच्छरैः विभिद्यमानत्वचि तुरगरजोविधूम्रविष्वक्कचलुलितं श्रमवार्यलंकृतास्ये मनः अस्तु किंच अर्जुनवचः निशम्य स्वप
रबलयोर्मध्ये रथं स्थाप्य स्वचक्षुषा परसैनिकायुः हृतवति भगवति मम प्रीतिरस्तु अपिच यः युद्धे स्वजनवधात् विमुखस्य अ
र्जुनस्य आत्मविद्यया कुमतिं अहरत् तस्य चरणे मे रतिरस्तु उतच यः स्वप्रतिज्ञां त्यक्त्वा मम प्रतिज्ञां सत्यां कर्तुं करे रथचक्रं धृत्वा
रथात् अवप्लुत्य मां हंतुं अभ्ययात् किंच मम तीक्ष्णबाणैर्हतः विध्वस्त॰ ॰चः रुधिराक्तश्च भगवान् आततायिनः मे वधार्थं मा

ओ॰१ अर्जुनः ओ॰४ तुरगरजसा धूसरैः इतस्ततः श्चलद्भिः केशैः विकीर्णेन स्वेदबिंदुरूपवारिणा॰ ॰लंकृतं मुखं यस्य तस्मिन्॰

स्तः सः मे गतिरस्तु किंच विजयरथकुटुंबे आत्तप्रतोदे धृतहयरश्मिनिसारथ्यश्रियाशोभमाने च भगवति मुमूर्षोर्मेरतिः अस्तु किंच
यस्य गतिविलासादिभिः प्रशस्यमानाः गोपिकाः यस्य भगवतः स्वरूपं प्राप्ताः तथा च युधिष्ठिर राजसूये मुनिगणादीनां ईक्षणीयः यः
श्रीकृष्णः अग्र्य पूजां प्रापसः विश्वात्मा मम दृष्टिगोचरोस्ति अहो मे भाग्यम् एवं भूतं योगिनां हृदि स्थितं श्रीकृष्णं विधूतभेदः अहं प्रा
सोस्मि सूतउवाच एवं आत्मभूते ईश्वरे सर्ववृत्तिभिः मनः स्थाप्य सः भीष्मः उपारमत् ततः ब्रह्मणि प्राप्तं भीष्मं ज्ञात्वा ते ऋष-
यः तूष्णीं बभूवुः तदा देवमानववादिनाः दुंदुभयो नेदुः साधवः शशंसुः खात्पुष्पवृष्टयश्च पेतुः ततः युधिष्ठिरः तस्य भीष्मस्य और्ध्वदे
हिकं कारयित्वा क्षणं दुःखितो भूत् ततः हृष्टाः मुनयः श्रीकृष्णं स्तुत्वा स्वाश्रमं ययुः ततः युधिष्ठिरः कृष्णेन सह हास्तिनपुरं गत्वा धृतरा
ष्ट्रं गांधारीं च सांत्वयित्वा धृतराष्ट्र कृष्णाभ्यां अनुज्ञातः सन् धर्मेण राज्यं चकार ४९ इति प्रथमे नवमः ९ शौनकउवाच अ
थ युधिष्ठिरः स्वरिपून् हत्वा राज्यं प्राप्य किंचकार सूतउवाच नष्टं कुरुवंशं परीक्षित् रक्षणेन अंकुरितं कृत्वा धर्मराज्ये स्था
प्य श्रीकृष्णः प्रसन्नो बभूव ततः धर्मः भीष्मोक्तं भगवतोक्तं च धर्मं श्रुत्वा इंद्रइव पृथ्वीं शशास धर्मराज्यपालके सति पर्जन्यः का
मं ववर्ष मही कामदुघा आसीत् गावः बहु पयांसि ददुः नद्यः समुद्राः गिरयः स वनस्पति वीरुधः फलंत्योषधयः सर्वाः कामम न्वृतु-
नस्य वै आधयः व्याधयोऽपि नासन् ततः श्रीकृष्णः हास्तिनपुरे कतिचिन्मासान् सुहृदां विशोकाय स्थित्वा धर्मादीन् पृष्ट्वा तैः रनु-
ज्ञातः सन् द्वारकां गंतुं रथमारुरोह तदा सुभद्रा द्रौपदी उत्तरा कुंती गांधारी अर्जुनः कृपः नकुलः सहदेवः भीमः धौम्यश्च सत्यवत्याद
यः स्त्रियश्च भगवतः विहरं न सेहिरे अहो यस्य यशः श्रुत्वा बुधः सन् तं हातुं नोत्सहते तस्मिन् भगवति दर्शनादिभिः न्यस्तधियः पार्थाः ८
तद्विरहं कथं सहेरन् किंच ते पार्थाः भगवंतं वीक्षंतः संतः अर्हणानयनाद्यर्थं च लंतिस्म तथा भगवति निर्गते सति बांधवस्त्रियः अभ

द्रंस्यादिति मत्वा बाष्पंन्यरुंधन् तदा मृदंगभेर्यादयः नेदुः तथा प्रासादारूढाः कुरुस्त्रियः श्रीकृष्णं कुसुमैः ववृषुः तदा अर्जुनः छत्रं जग्रा
ह उद्धवसात्यकी चामरे जग्रहतुः विप्राः आशिषो ददुः किंच कौरवस्त्रीणां परस्परमालापा बभूवुः तेच यः अग्रे एक एव आसीत् किं
च यः इदं सिसृक्षन् नीमायां अनुसृतवान् किंच योगिनः यत्पदं अमलबुद्ध्या पश्यंति किंच यः इदं जगत् लीलया सृजति अवति अत्ति
न तत्र सज्जते किंच यदा दुष्टा राजानः भवंति तदा जगत् क्षेमाय यः रूपाणि धत्ते स एवायं श्रीकृष्णः किल अहो यदोः कुलं धन्यं मधु
वनं च यस्मात् श्रीकृष्णः स्वजन्मनागमनेन च पूजयति किंच अहो द्वारकापि धन्या यतः यस्यां प्रजाः स्मितावलोकं भगवंतं पश्यंति
अपिच चैद्यादीन्प्रमथ्य वीर्यशुल्केन आनीताः रुक्मिण्यादयः स्त्रियः धन्याः यतः तासां गृहात् भगवान् नगच्छति एवं गदंतीः स्त्रीः
प्रति अवलोकनेन आनंदयन् हरिः ययौ किंच धर्मः शत्रुभ्यः शंकितः सन् हरये सेनां ददौ अथ दूरागतान् पांडवान्निवर्त्य ततः कु
रुजांगलपांचालशूरसेनब्रह्मावर्तकुरुक्षेत्रमत्स्यसारस्वतमरुसौवीराभीरान् देशान् अतीत्य आनर्तसमीपे प्राप्तः तत्रस्थैः जनैः तत्र
तत्र पूजितः सन् रथात् अवतीर्य सायंसंध्यामुपासितवान् तावत्सूर्योप्यस्तंगत इति ३६ इति प्रथमे दशमः १० सूत उवाच
ततः भगवान् आनर्तदेशान् प्राप्य तत्रस्थानां विषादं शमयन् शंखं दध्मौ सः दाध्मायमानः शंखः भगवतः करकंजसंपुटे सशब्दः
हंस इव शुशुभे तन्निनादं श्रुत्वा भगवद्दर्शनोत्सुकाः प्रजाः प्रत्युज्जग्मुः ततः भगवते उपायनानि दत्त्वा प्रीत्युत्फुल्लमुखाः सत्यः तं
आत्मारामं ऊचुः तद्यथा हे नाथ ते चरणारविंदं नताः स्म हे भगवन् नः माता सुहृत् पतिः पिता गुरुश्च त्वमेवासि अहो देवानामपि
तव दर्शनं दुर्लभं तत् अस्माकं जातं अतः वयं कृतार्थाः स्म यदा त्वं नः हित्वा सुहृद्दिदृक्षया गजाह्वयं मधुरां वा गतवान् तदा क्षणः अब्द
कोटितुल्योऽभूत् इति प्रजानां वचः शृण्वन् दृष्ट्यानाः अनुग्रहं कुर्वन् द्वारकां विवेश कथंभूतां नाम् स्वतुल्यबलैः यादवैः रक्षिताम्

सर्वर्तुसंपद्भिर्युक्तांगोपुरादिषु कृततोरणां गंधजलैः सिक्तमार्गाम् द्वारिद्वारि पूर्णकुंभबलिदीपादिभिरलंकृताम् एवंभूतांनगरींप्र टू
संश्रीकृष्णंश्रुत्वा वसुदेवः अक्रूरः उग्रसेनः रामः प्रद्युम्नः चारुदेष्णः सांबादयः हस्तिश्रेष्ठं पुरस्कृत्य ब्राह्मणैः शंखतूर्यादिवाद्यघोषे
णच सहरथैः अभिजग्मुः तथा वारमुख्यः स्त्रियः नटनर्तकादयश्च प्रत्युज्जग्मुः सूतमागधबंदिनः भगवच्चरितानिगायंतिस्म श्री
कृष्णोऽपि प्रह्वाभिवादनाश्लेषकरस्पर्शस्मितेक्षणैः यथान्यायंसर्वेषांमानंचक्रे ततः गुरुविप्रस्थविरादिभिः आशीर्भिर्युज्य
मानेश्रीकृष्णेराजमार्गगतेसति हर्म्यारूढाः पुरस्त्रियः तंददृशुः अहोतंनित्यंपश्यंतीनामपिपुरस्त्रीणांदृष्टिर्नातृप्यत् यतः यस्य
उरः श्रियः स्थानम् बाहवः लोकपालानांस्थानं अनेनसौंदर्यंसूचितम् ततः सितातपत्रव्यजनैरुपस्कृतः प्रसूनवर्षैरभिवर्षितः
पथि पिशंगवासा वनमालयाबभौ घनो यथा कोंडुपचापवैद्युतैः एवंभूतः कृष्णः पितृगृहंप्रविष्टः मातृभिः आलिंगितः सन् देव-
कीप्रमुखाः मातॄः ववंदे ततस्ताः पुत्रं अंकमारोप्य नेत्रोदकैः सिषिचुः अथ यत्र षोडशसहस्रस्त्रीणां प्रासादाः तत् स्वगृहं प्राविश
त् ततः आगतंस्वपतिंविलोक्यव्रतैः सह आसनात् उत्तस्थुः तदानींदृष्ट्वातंपरिरेभिरे यतः चंचलापिलक्ष्मीः यत्पदंनत्यजति अ
न्यासांतुकाकथा एवंक्षितिभारभूतानांराज्ञांमध्येकलहमुत्पाद्यमिथोघातयित्वास्वयंउपरराम वायुः वेणुस्तंबे अग्निमुत्पाद्य
यथाशाम्यति तद्वत् एवंविधः श्रीकृष्णः स्वमायया अवतीर्णः सन् प्राकृतवत् स्त्रीभिः सहरेमे ताः स्त्रियः भगवतोमनः विलासैः
क्षोभयितुंनशेकुः ईदृशं भगवंतंलोकः विषयिणंमन्यतेयतोऽबुधः किंच भगवतः ऐश्वर्यं एतदेवकिंतत् प्रकृतिस्थोऽपितद्गुणैर्नयु
ज्यते इतियत् तंमूढाः स्त्रियः स्त्रैणंमेनिरे अहंकारवृत्तयः क्षेत्रज्ञंस्वाधीनंयथामन्यंतेतद्वत् ३९ इतिप्रथमेएकादशः ११ ९
शौनकउवाच हे सूत अश्वत्थाम्नामुक्तेनब्रह्मास्त्रेणपीडितः उत्तरायाः गर्भः भगवताकृष्णेनजीवितः तस्यपरीक्षितः जन्मकर्म

ओ॰६ क्रीडांशरीरसंस्कारंसमाजोत्सवदर्शनम् हास्यंपरगृहेयानंत्यजेत्प्रोषितभर्तृकेति १

निधनानि तथायस्य शुकः ज्ञानंयथा अदात् तत्सर्वंश्रोतु मिच्छामि तत्नःवद सूतउवाच कृष्णपादाब्जसेवयानिस्पृहःस
न् युधिष्ठिरःपितृवत् प्रजाःपालयामास तस्यमुकुंदमनसःसंपदःयज्ञोपार्जितलोकाःमहिषीभ्रातरःमहीजंबुद्वीपाधिपत्यंस्वर्ग-
व्यासंयशश्च एतेमुदंनददुः क्षुधितस्यस्रक्चंदनादयोयथा अथप्रस्तुतमाह गर्भगतःपरीक्षित् श्यामंचतुर्भुजंपरितःगदया-
ब्रह्मास्त्रतेजःविधमंतंअंगुष्ठप्रमाणंकंचित् पुरुषंदृष्ट्वा असौकइतिवितर्कितवान् ततःदशमासपरिच्छेदस्यराज्ञःपरीक्षितः
पश्यतःसतःब्रह्मास्त्रंविधूयहरिःतत्रैवांतर्हितः ततःसर्वगुणयुक्तेसानुकूलग्रहलग्नेकाले पांडोर्वंशधरःपरीक्षित्जज्ञेतदाप्रीतम-
नाःधर्मराजःधौम्यादिभिर्मंगलंवाचयित्वा तस्यजातकंकृत्वासुवर्णगावःमहीग्रामान् हस्तिनःअश्वान् रत्नंच विप्रेभ्योददौ ततः
तुष्टाःब्राह्मणाःराजानंऊचुः तद्यथा एषःपुरुवंशेनाशंगतेसति श्रीविष्णुनारातःअतःलोकेनाम्नाविष्णुरातइति भविष्यति यु
धिष्ठिरउवाच हेविप्राःअयंपरीक्षित् वंश्यान् राजर्षीन्सुयशसाअनुवर्तिता भविष्यतिकिं विप्राऊचुः हेपार्थअयंप-
रीक्षित् इक्ष्वाकुरिवप्रजारक्षकः श्रीरामइवब्रह्मण्यः सत्यसंधश्चशिबिरिवदाताशरण्यश्च भरतइवज्ञातीनांयशोविस्तारकः
अर्जुनकार्तवीर्याविवधन्वी अग्निरिव असह्यः समुद्रइवगंभीरः सिंहइव पराक्रमी हिमवानिव सतांसेव्यः भूरिव क्षमावान् पि
तराविवसहिष्णुः साम्येब्रह्मसमः प्रसादेशिवसमः सर्वभूतानांआश्रयेविष्णुसमः किंच गुणैःविष्णुरिव औदार्येरंतिदेवइव-
ययातिरिवधार्मिकः धैर्येबलिसमः भक्त्याप्रह्लादइव किंच अश्वमेधत्रयकर्ता वृद्धानांसेवकः राजर्षीणांजनयिता कुमार्गिणां
शास्ता कलेःनिग्रहीता धर्मस्यरक्षकः एवंविधोभविष्यति किंच द्विजपुत्रप्रेरिततक्षकात् स्वमृत्युंश्रुत्वामुक्तसंगःसन् श्रीशु
कात् ज्ञानंप्राप्य गंगायांदेहंत्यक्त्वासाक्षात् हरेःपदंयास्यति इतिराज्ञेउक्त्वालब्धपूजाःज्योतिर्विदःविप्राःस्वगृहान्जग्मुःततःसः

नरेषुगर्भेदृष्टंपुरुषंपरीक्षेत अतःपरीक्षिदितिनाम्नालोकेप्रसिद्धोभविष्यति सःपितृभिःपाल्यमानःशुक्लपक्षस्थश्चंद्रइववदृ
धे अथपूर्वंअपकृष्यउक्तान् अश्वमेधान् स्वावसरेसप्रकारंकथयति ज्ञातिद्रोहंदूरीकर्तुंअश्वमेधेनयक्ष्यमाणः करदंडाभ्यांवि
नाऽलब्धधनोराजाधर्मःचिंतयामास ततःधर्मस्यअभिप्रेतंआलक्ष्यकृष्णचोदिताःभ्रातरःउत्तरदिशिमरुत्तयज्ञेत्यक्तंसुवर्ण
पात्रादिकंधनंआनीयददुः तेनधनेनसंपादितयज्ञोपकरणःयुधिष्ठिरःत्रिभिःवाजिमेधैःहरिंसमयजत् ३४ इतिप्रथमेद्वाद-
शः१२ सूतउवाच तीर्थयात्रायांगतोविदुरःमैत्रेयात् स्वगतिंहरिंज्ञात्वाहास्तिनपुरंअगात् ततःमैत्रेयस्यपुरतःयावतःप्र
श्नान् प्रथमंकृतवान् पश्चात् त्रिचतुरप्रश्नार्थज्ञानमात्रेणकृतार्थःसन् तेभ्यःप्रश्नेभ्यउपरराम ततःतंविदुरंआगतंदृष्ट्वाबंधु
भिःसहधर्मःधृतराष्ट्रःयुयुत्सुःसंजयःकृपःपृथागांधारीद्रौपदीसुभद्रादयश्चहर्षेणसंमुखंजग्मुः ततःआलिंगनादिभिःअभि-
संगम्यप्रेम्णाअश्रूणिमुमुचुःततःधर्मःआसनेउपविष्टंभुक्तवंतंविदुरंपूजयित्वाप्राह युधिष्ठिरउवाच हेविदुरविपद्गणा
त् मुहुःमोचितान्नःस्मरथकिम् किंचतीर्थयात्रांकुर्वतात्वयादेहवृत्तिःकथंकृता कानिचतीर्थानिसेवितानि किंच भगवद्भक्ताःस्व
यंशुद्धाःसंतःस्वांतस्थेनगदाभृतातीर्थानिपवित्रीकुर्वंतःचरंति अपिचनःसुहृदःकृष्णदेवताःयदवःस्वपुर्यांसुखिनःसंतिकिम्
उतत्वयाक्वापिदृष्टाःश्रुतावाकिम् एवंराज्ञापृष्टःविदुरः यदुकुलक्षयंविनासर्वंअवर्णयत् अहोदुःखयुतान् पांडवान् द्रष्टुंअक्ष
मःअतोयदुकुलक्षयंनावर्णयत् अथपांडवैःसत्कृतःविदुरःधृतराष्ट्रायतत्वंउपदिशन् कंचित्कालंतत्रअवात्सीत् ननुशूद्रोसौ
कथंउपदिशेत् नायंशूद्रःकिंतुशूद्ररूपेणयमआसीत् तत्रहेतुःमांडव्यऋषेःशापात् शतवर्षपर्यंतंशूद्रत्वंदधार तावत् यमलोके-
पातकिषुअर्यमादंडंदधार अथलब्धराज्यःयुधिष्ठिरःवंशधरंपात्रंदृष्ट्वाभ्रातृभिःसहस्त्रियामुमुदे एवंगृहेषुसक्तानांतेषामा

यु: कालःगतः ततज्ज्ञात्वा विदुरः धृतराष्ट्रं अभाषत हे धृतराष्ट्र गृहात् शीघ्रं निर्गम्यतां अयं दुरंतः कालः प्राप्तः तं पश्य पश्य अरे अस्य प्रतिक्रिया प्रियैः प्राणैरपि न येन कालेन अयं जनः प्राणादिभिर्वियुज्यते तव पितृभ्रातृसुहृत्सुताः हताः वयश्चापि गतं देहश्च जरया ग्रस्तः सां प्रतं परगेहे वससि अहो जंतोः जीविताशा बलीयसी कुतः त्वं यथा स्वपुत्रहंत्रा भीमेन दत्तमन्नं श्वान इव आसि किंच येषां पांडवानां अग्निः प्रक्षिप्तः विषं दत्तम् स्त्रियश्च दूषिताः तद्दत्तान्नलब्धप्राणैः किम् अपितु न किंचित् एवं दैन्यं अनुभवतस्तव अयं देहः वस्त्रमिव क्षीयते अत एव धीरो भव धीरलक्षणमाह स्वतः परोपदेशेन वा जातवैराग्यः सन् हृदि हरिं कृत्वा गेहात् यः गच्छेत् स धीर इति त्वं तु धीरो नाभूः अतः त्वं उदीचीं दिशं गच्छ इतो र्वाक् प्रायशः कालः पुंसां गुणविकर्षणः एवं विदुरेण बोधितः धृतराष्ट्रः तेन सह स्वेषु स्नेहपाशं छित्वा गृहात् निश्चक्राम गच्छंतं पतिं दृष्ट्वा गांधारी हिमाचलमनुजगाम ततो धर्मराजः संध्यावंदनादि कृत्वा गुरुवंदनार्थं गृहं प्रविष्टः सन् तौ पितरौ गांधारीं च नापश्यत् तत्रासीनं संजयं पप्रच्छ हे संजय नः तातः धृतराष्ट्रः विदुरः गांधारी च इतः क्व गताः मयि अपराधं शंकमानः गंगायां नापतत् किम् अस्मत्पितरि पांडौ मृते नः शिशून् यौ अरक्षतां तौ क्व गताविति वद सूत उवाच धृतराष्ट्रं अपश्यन् अतिपीडितः संजयः प्रत्युत्तरं न दत्तवान् ततः बुद्ध्या मनसि धैर्यं धृत्वा धर्मराजमुवाच संजय उवाच हे धर्मराज तेषां व्यवसितं अहं न जाने तैरहं वंचितोऽस्मि एतस्मिन्काले तुंबुरुणा सह नारदः आगतः तं अभिवाद्य युधिष्ठिर आह युधिष्ठिर उवाच हे नारद नः पित्रोः गांधार्याश्च गतिं अहं न वेद्मि भगवान् सर्वज्ञोसि अतः वद अथ नारद आह हे राजन् शोकं मा कुरु यतः इदं जगत् कालाधीनं इमे लोकाः वाक्तंत्या बद्धाः संतः ईश्वराय बलिं वहंति यथा दामभिर्बद्धाः वृषभाः तद्वत् यथा क्रीडोपस्कराणां योगवियोगौ क्रीडाकर्तुरिच्छया भवतः तद्वत् ईश्वरेच्छया नृणां योगवियोगौ स्याताम्-

ओं ध. एष्यन्

मृतस्मात् अस्मिँल्लोकेस्नेहात् विनाशोकहेतुर्नास्ति अतःमत्सिनरः वनंगताःसंतः कथंवर्तेरन् इतिचिंतांत्यज अहोअयंदेहः
कालाधीनःसन् अन्यान् कथंरक्षेत् सर्पग्रस्तोयथाअन्यंनरक्षति तद्वत् अथसर्वेषांईश्वरकल्पितावृत्तिरस्त्येव तथाहिसह
स्तानांजीवनंअहस्तानि चतुष्पदांजीवनंअपदानि फल्गूनि तत्रमहतांजीवोजीवस्यजीवनं हेराजन् इदंजगत् एकएवनारायणः
माययाबहुधाभाति सएवभगवान् दैत्यानांनाशाय अस्यांभूम्यां अवतीर्णोस्ति सःदेवकार्यंनिष्पादितवान् किंचित् शेषंप्र-
तीक्षते तावद्यूयंप्रतीक्षध्वं प्रस्तुतमाह गांधार्यासह धृतराष्ट्रःविदुरश्चहिमवतोदक्षिणेन ऋषीणांआश्रमंगतः यत्रगंगाआ-
त्मानंऋषिप्रीतयेसप्तधाव्यधात् तत्तीर्थंसप्तस्रोत इतिवदंति तत्रत्रिकालंस्नात्वा अग्नीन्हुत्वास्वस्थचित्तःहरिभावनयाध्व
स्तरजःसत्वतमोमलःधृतराष्ट्रःमनःबुद्धौएकीकृत्यबुद्धिंजीवेप्रविलाप्य घटाकाशंमहाकाशेयथाविलाप्यते तद्वत् जीवंब्र
ह्मणिप्रविलाप्यनिरुद्धेंद्रियःसन् स्थाणुरिवनिश्चलःअधुनाआस्ते तस्यत्वंगत्वाअंतरायोमाभूः सःधृतराष्ट्रःइतःपंचमेहनिदेहंस्वस्य
ति सचभस्मीभविष्यति ततःगांधार्यपि अग्निंप्रवेक्ष्यति विदुरश्चतत् आश्चर्यंदृष्ट्वाहर्षशोकयुतःसन् तीर्थस्नानार्थंगमिष्यति इ
त्युक्त्वातुंबुरुणासह नारदःस्वर्गमारुहत् युधिष्ठिरःनारदवचःहृदिकृत्वाशोकंजहौ ५८ इतिप्रथमेत्रयोदशः१३ सूतउवाच
हे शौनक द्वारकायांकृष्णचेष्टितंज्ञातुंअर्जुनेगतेसति कतिचिन्मासाःगताःकालातिक्रमेपिसोऽर्जुनःनायातःतदाधर्मःउत्पातान् का
लस्यघोरांगतिंचददर्श तदेवाह नृणांपापांवृत्तिंकपटप्रायंव्यवहारंवंचनप्रायंसख्यंपितृमातृसुहृत् भ्रातृदंपतीनांपरस्परंकल
हंलोभादिनाधर्मप्रवृत्तिंचदृष्ट्वाधर्मःभीमंआह युधिष्ठिरउवाच हेभीमबंधुदिदृक्षयाद्वारकायांमयाप्रेषित अर्जुनःअ ११
द्यापिकस्यहेतोर्नायाति तत् अहंनवेद्मि नारदेनकथितःकालःसएवप्राप्तःकिम् यस्मात्श्रीकृष्णात् संपदःराज्यंस्त्रियःप्राणाःप्र

जाः शत्रुविजयश्च एते ऽस्माकं आसन् स भगवान् स्वस्थानं गतः किम् हे भीमदिव्यान् भौमान् दैहिकांश्च भयसूचकान् उत्पातान् पश्य तेन मम वामो ऽक्षिबाहवः स्फुरंति हृदि कंपः वर्तते एषा क्रौष्टुी सूर्याभिमुखा रौति अयं श्वा मामभिमुखं रौति गवादयः मांसव्यं कुर्वंति गर्दभादयः दक्षिणं कुर्वंति मम अश्वान् रुदतो लक्षये अयं उलूकः शब्दैः विश्वं शून्यमिच्छति भूः कंपते वायुः तीक्ष्णो वाति मेघाः रक्तं वर्षंति सूर्यहतकांतिं ग्रहयुद्धं च पश्य आज्येन अग्निर्न ज्वलति वत्साः स्तनं न पिबंति देवता निरुदंति सर्वे जनाः भ्रष्टश्रियो निरानंदाः दृश्यंते अतः एतैः उत्पातैः कृत्वा भगवतः पदैः हीना भूरित्यहं मन्ये एवं धर्मस्य चिंतयतः सतः अर्जुनः आगत्य पादयोः पतितः तं अधोमुखं रुदंतं हतप्रभं अर्जुनं विलोक्य कंपितहृदयः धर्मः नारदोक्तं स्मरन् अर्जुनं पप्रच्छ युधिष्ठिर उवा॰ हे अर्जुन द्वारकायां सर्वे यदवः सुखं आसते किम् अस्मन्मातामहः शूरः मातुलो वसुदेवः तत्पत्न्यो देवकी प्रमुखाः उग्रसेनः हृदीकः कृतवर्मा अक्रूर जयंत गद सारण शत्रुजित् बलराम प्रद्युम्नानिरुद्ध सुषेण चारुदेष्ण सांब श्रुतदेवोद्धव सुनंदनंदादयश्च एते सर्वे सुखमासते किम् तथा भक्तवत्सलः सुहृद् हृतः लोकमंगलः अनंतसखः श्रीकृष्णः स्वपुर्यां आस्ते किम् एते सर्वे अस्मान् स्मरंति किम् किंच कृष्णभुजगुप्तायां द्वारकायां यदवः नंदंति अपिच यस्य चरणसेवया युद्धे देवान् निर्जित्य देवभोग्यान् पारिजातादीन् सत्यभामादयः सेवंते किंच यद्बाहुगुप्ताः यदुवीराः बलात् आनीतां सुधर्मां सभां चरणैः आक्रामंति स गोविंदः सुखमास्ते किम् किंच हे अर्जुन तव आरोग्यं अस्ति किम् किंच तव तत्र अवमानो न जातः किं किंच त्वया अर्थिने दास्यामीति प्रतिज्ञाय न दत्तं किम् किंच ब्राह्मणं बालं वृद्धं गां रोगिणं स्त्रियं च शरणागतान् एतान् न रक्षितवान् किम् किंच अगम्यां स्त्रियं गतः किं किंच त्वं अन्यैः पराभूतः किं किंच वृद्धान् बालांश्च विहाय त्वया पूर्वं भोजनं कृतं किं किंच प्रियतमेन श्रीकृष्णेन रहितो ऽस्मि इति मन्यसे किम् अन्यथा ते मनःपीडा न घटेत ४४ इति प्रथमे चतुर्दशः १४ सूत उवाच

एवंधर्मराजेनविकल्पितःअर्जुनःशोकेनशुष्यद्धृदनःसन्प्रति भाषितुंनाशक्नोत् ततःपार्थःकृच्छ्रेणनेत्रजलंविमृज्यकृष्णाकृतस
रव्यादीनिसारथ्यादिषुस्मृत्वाऽह अर्जुनउवाच हेमहाराजश्रीकृष्णेनवंचितोहं तथादेवाश्चर्यकरंमेतेजः हृतम् किंच यस्य
वियोगेनायंलोकः अप्रियदर्शनो भवति प्राणरहितोदेहोयथा नहृत् यस्याश्रयात् स्वयंवरेराज्ञांतेजः हृत्वाद्रौपदीप्राप्ता तथा भगव
त्सान्निध्यात् अग्नयेखांडववनं अदाम् ततःमयकृतासभा चलब्धा किंच यत्तेजसा भीमःजरासंधंहतवान् ततः तेनानीयरुद्धाः रा
जानःविमोचिताः तएव भूपाः तवयज्ञेबलिं आनीतवंतः किंच सभायांयैःदुःशासनादिभिः द्रौपद्याःकेशबंधः स्पृष्टः तेषांस्त्रियः
हतनाथाःयत्कृपयामयाकृताः किंच यः भगवान् दुर्वाससःदुःखात् अस्मान् वनंएत्यजुगोप किंच यत्तेजसा शूलपाणिःशिवःयुधि
विस्मयंप्रापितःसन् मह्यं पाशुपतास्त्रमदात् तथान्येपिलोकपालाःनिजास्त्राणि ददुः किंच इंद्रस्य अर्द्धासनमपिप्राप्तोहं किंच स्व
र्गेक्रीडतःमेइंद्रादयोदेवाः यस्यप्रसादात् गांडीवंददुः हे धर्मतेनश्रीकृष्णेन अद्यवंचितोऽस्मि यस्यप्रसादात् निवातकवचादीन् स्व
र्गेजितवानस्मि तथाउत्तरगोग्रहेच भीष्मादीन् विजित्यतेषांधनंशिरोभूषणंउष्णीषंच मयाहृतम् तथाकुरुयुद्धेयः ममसारथि
र्भूत्वाहृष्ट्यापरसैनिकानांतेजोहृतवान् यस्यप्रसात्तेषांअस्त्राणि ममांगंनपस्पृशुः दैत्यास्त्राणि भगवद्भक्तंयथानहृत् अहोयत्पा
दपद्मं भक्ता भजंति स भगवान् सारथ्येमयावृतः हे धर्मराज माधवस्यपार्थार्जुनेत्यादिनर्मभाषणानिस्मर्तुर्मेहृदयंक्षोभयंति किं
च शय्यासनाटनविकत्थनभोजनादिषुऐक्याद्धेतोः कदाचिद्व्यभिचारं दृष्ट्वा हे वयस्य सत्ययुक्तस्त्वमसि इति वक्रोक्त्यातिरस्कृ-
तोपि सख्युःसखेवपितृवत्सुतस्यमेऽपराधंसेहे तेनपुरुषोत्तमेनाहंवंचितः किंच पथिश्रीकृष्णस्यस्त्रीसमूहंरक्षन् गोपैर्जितोऽस्मि १२
सोहंरथीतदेवधनुस्तएवशराःसएवरथःतएवहयाः एतत्सर्वंयद्वियोगात् भस्मनिहुतमिवव्यर्थमभूत् हेराजन् त्वया क्षेमंपृष्टा-

नांसुहृदांमद्यप्राशनेनमत्तानांमध्येचतुःपंचावशिष्टाःसंति प्रायेणइदं भगवतोविचेष्टितं यथामहांतःजलचराःक्षुद्रान् भक्षयंतितथावलिष्ठैर्यदुभिः इतरान् यदून् संहृत्य भूभारं संजहार अतःपरं वक्तुंनशक्नोमीति सूचयन्नाह मनःशांतिकराणि भगवद्वाक्यानि स्मरतः मेंचित्तं आकर्षंति एवं भगवतः पादपद्मं स्मरतोऽर्जुनस्यमतिः शांतासीत् ततः वासुदेवचरणचिंतयानष्टविषयवासनः अर्जुनः कुरुयुद्धे भगवदुक्तं गीतोक्तज्ञानं पुनःप्राप किंच ब्रह्मसंपत्याच्छिन्नद्वैतभ्रमःसन् विशोकोजातः एवं भगवन्मार्गं ज्ञात्वा यदुकुलस्यनाशंचश्रुत्वायुधिष्ठिरः स्वर्गंगंतुंमनश्चक्रे तस्मिन्नेवकालेधनंजयोदितंयदूनांनाशंभगव इतिंचश्रुत्वाऽधोक्षजंध्यायंतीसती पृथादेहंजहौ यदाहरिः कंटकंकंटकेनेव भूभारं दूरीकृत्य नटवत् अंतरधात् तस्मिन्नेवसमये अज्ञानांमनसि कलिः प्रादुरभूत् ततः सर्वत्रकलिप्रवृत्तिंज्ञात्वा स्वपौत्रं परीक्षितं स्वराज्येऽभिषिच्यतथाऽनिरुद्धपुत्रं वज्रं मथुरायांशूरसेनपतिं कृत्वा प्राजापत्येष्टिंच विधायअग्नीन् आत्मनि समारोपितवान् ततःतत्रैव दुकूलवलयादि विसृज्य अहं ममतारहितः धर्मराजः इंद्रियाणि मनसि विलाप्यतन्मनः प्राणे प्राणं अपाने अपानं मृत्यौ मृत्युं देहे देहं गुणत्रये गुणत्रयं अविद्यायांतांजीवे शुद्धजीवंब्रह्मणिविलाप्य चीरवासानिराहारो बद्धवाक्मुक्तमूर्द्धजः धर्मःजडोन्मत्तपिशाचवत् लोकंदर्शयन् हृदिब्रह्मध्यायन् उदीचींदिशंनिरगात् तमनुसर्वे भीमादयो भ्रातरः मनसावैकुंठचरणांबुजं ध्यायंतः संतः तस्मिन्नारायणपदे गतिंप्रापुः ततोविदुरोपिप्रभासेदेहं विसृज्यस्वस्थानंगतवान् ततः द्रौपदीच भगवतिमतिंकृत्वा भगवंतं आप यः श्रद्धया पांडुसुतानां प्रयाणंशृणोति सःहरौभक्तिंलब्ध्वासिद्धिंउपैति ५१ इतिप्रथमेपंचदशः १५ सूतउवाच ततःपरीक्षित् महींशशास सःउत्तरस्यकन्यांइरावतींनाम उपयेमे तस्यांजनमेजयादीन् चतुरः पुत्रान् जनयामास ततः कृपंगुरुंकृत्वागंगातीरे भूरिदक्षिणान्त्रीन् अश्वमेधान् चकार त

ओ०३ एवमितिसूतस्यवाक्यं

तः दिग्विजयेनृपलिंगधरंगोमिथुनंपदाघ्नंतंकलिंनिगृहीतवान् शौनकउवाच हेसूतपरीक्षित्कस्यहेतोःकलिंनिजग्राह यः
पदागांअहनत् सःकः शूद्रः इदंकृष्णकथाश्रयमस्तिचेत् तर्हिकथय अन्यैरसदालापैःकिम् यैःवृथाआयुःनश्यति अस्माकंसत्र
प्रयत्नोपिहरिकथाश्रवणार्थएव अस्मिन्सत्रेमृत्युःआहूतः अतःसत्रसमाप्तिपर्यंतंकोपिजनःनम्रियेत अनेनभगवत्कथा
श्रवणावकाशःसूचितः अहोहरिकथापानंविना अस्यअल्पायुषःजनस्यआयुःरात्रौनिद्रयादिवाचव्यर्थकर्मभिःनश्यतिअ
तःहरिकथांकथय सूतउवाच यदास्वदेशेकलिंप्रविष्टंसःशुश्राव तदारथंआस्थायधनुर्गृहीत्वासेनयावृतःपरीक्षित्
दिग्विजयार्थंपुरात् निर्गतःसन् भद्राश्वंकेतुमालंभारतंवर्षंउत्तरान्कुरूंश्चविजित्यकरंजगृहे तत्रतत्रजनैर्गीयमानंस्वपूर्वेषां
यशःअश्वत्थाम्नोऽस्त्रतःस्वरक्षणंवृष्णिपार्थानांकेशवेभक्तिंचश्रुत्वासंतुष्टःसन्तेभ्यःधनानिवासांसिहारांश्चददौ किंचपांड
वेषुश्रीकृष्णस्यसारथ्यादिकर्माणिशृण्वन् विष्णोश्चरणारविंदेभक्तिंकृतवान् तदाएवंवर्तमानस्यराज्ञःसतःयद्वृत्तंतत्शृणु
एतस्मिन्कालेएकेनपदाचरन्वृषरूपधरःधर्मःगोरूपांपृथ्वींरुदंतींआलक्ष्यउवाच हेभद्रेतेअनामयंकच्चित् यतःम्लानवद
नाअसि अतोभवतींअंतराधिंआलक्षये किंचपादैर्न्यूनंएकपादंमांतथाशूद्रैःभोक्ष्यमाणांआत्मानंवाशोचसिकिम् अथवा
असुरैःहृतयज्ञभागान्देवान्शोचसि किंवाभर्तृभिःअलक्ष्यमाणाःस्त्रियःपितृभिररक्ष्यमाणान्बालान्वाकुकर्मणिब्रह्मकु
लेस्थितांसरस्वतींवाकलिव्याप्तान्क्षत्रबंधून्वाजारकर्माद्यधर्मनिरतंजीवलोकंवाभूभारनाशार्थंकृतावतारस्यहरेःअंतर्धा
नतःवाशोचसिकिम् हेवसुंधरेयेनत्वंकर्शितासितत्कारणंकथय धरण्युवाच हेधर्मयत्मांपृच्छसितत् सर्वंत्वंवेद य १३
स्याश्रयेणत्वंचतुष्पात् आसीः यस्मिन्भगवति सत्यंशौचंदयाक्षांतिस्त्यागःसंतोषआर्जवम् शमोदमस्तपःसाम्यंतितिक्षोप

रतिः श्रुतम् ज्ञानैश्वर्य शौर्य स्वातंत्र्य धैर्य प्रागल्भ्यौजगांभीर्यास्तिक्य कीर्ति मानानहंकाराः एते अन्येच गुणाः नित्यं संति तेन श्रीनिवासेन रहितं पाप्मना कलिना अवलोकितं च लोकं शोचामि तथा आत्मानं भवंतं पितॄन् ऋषीन् देवान् साधून् वर्णान् आश्रमांश्च शोचामि किंच यस्याः प्रसादं ब्रह्मादयो वांच्छंति सा लक्ष्मीः स्वगृहं कमलवनं हित्वा यत्पाद पद्मं भजते तस्य भगवतः श्रीमत्पदैश्चिन्हितां अत एव गर्वितां मां यः त्यक्तवान् किंच यः यदुषु अवतीर्य भूभारं जहार एवं भूतस्य भगवतः विरहं का वा सहेत एवं प्राचीसरस्वतीतीरे पृथ्वीधर्मयोः कथयतोः सतोः तत्र परीक्षिन्नाम राजर्षिः प्रापः ३६ इति प्रथमे षोडशः १६ सूत उवाच तत्र सरस्वत्यां राजा परीक्षित् दंडहस्तं नृपचिह्नधरं शूद्रं तथा भयात् मूत्रयंतं श्वेतं एकपादं शूद्रताडितं वृषं तथा शूद्रपदाहतां साश्रुवदनां तृणमिच्छंतीं गां च दृष्ट्वा स्वयं रथारूढः धृतकार्मुकः सन् गंभीर वाचा पप्रच्छ अस्मिन् मच्छरणे लोके बलात् दीनान् हंसि एवं भूतः नृपवेषधरः कर्मणा शूद्रः त्वं कोऽसि किंच अर्जुनेन सह श्रीकृष्णे अंतर्हिते सति निरपराधान् रहसि प्रहरसि अतस्त्वं वधमर्हसि ततः वृषं प्रत्याह हे वृष श्वेतवर्ण पादैर्न्यूनः त्वं कोऽसि कश्चिद्देवः त्वं वृषरूपेण अस्मान् खेदयन् वर्तसे किम् किंच पांडवरक्षिते भूतले ते अश्रूणि विना इतरेषां प्राणिनामश्रूणि नानुपतंति त्वमपि शोकं मा कुरु अस्मात् शूद्रात् ते भयमपयातु गां प्रत्याह-हे अंब खलानां मयि शास्तरि सति त्वं मा रोदीः किंच अहो यस्य राज्ये दुष्टैः प्रजाः त्रस्यंते तस्य राज्ञः कीर्त्यायुर्भाग्य परलोकाः नश्यंति किंच दीनानां दुःखहरणमेव राज्ञां परो धर्मः अतः एनं शूद्रं वधिष्यामि हे वृष तव पादान् कः अवृश्चत् तं अस्मत्कीर्तिनाशकं रं वद किंच निरपराध भूतेषु अपराधकर्तुः देवस्यापि भुजं हरिष्यामि इतरस्य किं वक्तव्यम् यतः प्रजापालनमेव राज्ञां परो धर्मः

धर्म उवाच एतद्वः पांडवेयानां युक्तमार्तभयं वचः किंच यस्मात् प्राणिनां दुःखं भवति तं पुरुषं न जानीमः यतः वादिनां वाक्यैः दै

वकर्मस्वभावादिभिः वयं विमोहिताः अतः हे राजन् त्वं स्वबुद्ध्या दुःखदातारं विचारय एवं उक्के सति गतमोहः सन् निश्चित्य उवाच रा
जोवाच त्वं वृषरूपधर्मोसि यतः त्वं घातकं जानन्नपि न सूचयेदेव रूपं धर्मं ब्रवीषि सूचने दोषमाह अधर्मकृतस्थानं सूचकस्या
पि भवति अथवा भगवन्मायायाः गतिरगोचरा अतः नोक्तवान् किंच तपः शौचं दया सत्यं इति चत्वारः तव पादास्तन्मध्ये अधर्मांशैः
स्मयसंगमदैः त्रयो भग्नाः इदानीं सत्यरूपः एक एव उर्वरितः तमपि अधर्मः कलिः हर्तुमिच्छति किंच इयं उरु भराक्रांता भगवता उज्झि
ता च भूः मां शूद्रा भोक्ष्यंतीति हेतोः शोचति इति धर्मं महीं च सांत्वयित्वा कलिं हंतुं परीक्षित् खड्गं आददे एतादृशं परीक्षितं दृष्ट्वा नृप
चिन्हं विहाय कलिः तच्चरणयोः पतितः ततः तं तथाविधं दृष्ट्वा दयालुः राजा न अवधीत् आह च राजोवाच हे कले बद्धांजलेः हे
तोः तव मत्तः भयं नास्ति परं त्वया मद्देशे न वर्तितव्यम् यतः त्वं अधर्मबंधुरसि तदेवाह राजदेहेषु त्वयि वर्तमाने सति लोभानृतचौर्य
दौर्जन्यस्वधर्मत्यागालक्ष्मीः कपटकलहदंभरूपः अधर्मो भवति अतः हे अधर्मबंधो यद्य ईश्वरं यज्ञैर्यजंति स ईश्वरः यज्ञकर्तॄणां
शं तनोति एवं भूते धर्मरूपे ब्रह्मावर्ते मद्देशे त्वया न वर्तितव्यम् सूत उवाच एवं परीक्षिता उक्तः कलिः जातकंपः सन् दंडपा
णिमिव हंतुमुद्यतं राजानं आह हे सार्वभौम तवाज्ञया यत्र क्वापि वत्स्यामि तत्र तत्र आत्तेषु शरासनं त्वामेव लक्ष्यये तस्मात् त्वदाज्ञा
धारकः सन् यत्रैव निश्चलो वत्स्यामि इति स्थानं दर्शय हे शौनक एवं प्रार्थितो राजा तस्मै कलये द्यूतं मद्यपानं स्त्रियः प्राणिवधश्च इ
ति स्थानानि ददौ पुनः याचमानाय तस्मै सुवर्णं अदात् तद्दानात् अनृतं मदं स्त्रीसंगं हिंसां वैरं च अदात् एवं एषु स्थानेषु राजाज्ञाधा
रकः कलिः न्यवसत् अतः श्रेष्ठत्वमिच्छुः पुरुषः तत्रापि विशेषतः राजा एतानि न सेवेत ततः सः महीं धर्मं च सांत्वयित्वा धर्मस्य नष्टा १४
न् पादान् संदधे स राजा धर्मेण दत्तं सिंहासनं आश्रित्य अधुना गजाह्वये वर्तते यस्य राज्ये यूयं सत्रं कर्तुं दीक्षां कृतवंतः ४४ इति प्रथ

मेसप्तदशः१७. सूतउवाच यःपरीक्षित्अश्वत्थाम्नोस्त्रतेजसादग्धः तथापिमातुरुदरे भगवदनुग्रहात्नमृतः किंच ब्रह्मको-
पोत्थितात् प्राणनाशकात् तक्षकात्नसंमुमोह ततःसर्वत्रसंगंत्यक्त्वाशुकशिष्योभूत्वाज्ञाततत्वःसन् गंगायांस्वदेहंजहौ अहो
भगवच्चरणारविंदंस्मरतांअंतकालेपिभ्रमोनभवति यावत्परीक्षित्राज्यंचकार तावद्भगवदंतर्धानानंतरमेवप्रविष्टोपिक
लिःनसमर्थोभूत् यस्मिन्कलौपुण्यानिसंकल्पमात्रेणसिद्ध्यंति पापानितुकृतान्येवसिद्ध्यंति अतःराजाकलिंनजघान एवं
हेशौनक इदंपुण्यंपरीक्षिदाख्यानंयुष्मभ्यंवर्णितम् किंच भगवतःयाःयाःकथास्ताःस्ताःपुंभिःसेव्याः इदमेवसर्वसारमस्ति
ऋषयऊचुः हेसूतयतःत्वंहरेर्यशःवर्णयसि अतःचिरकालंजीव किंच अस्मिन्सत्रेगोविंदकथारूपंमधुनःपाययसि
साधुसंगलवेनापिस्वर्गंमोक्षंच समंनतुलयाम किंपुनःराज्यादयः किंच रसवित्पुरुषःकोनाम भगवत्कथायांतृप्येत् तस्मात् ह
रेःउदारचरितंशुश्रूषतांनःकथय अपिच सःपरीक्षित्राजाशुकोक्तज्ञानेनदेहंत्यक्त्वा भगवत्पदंप्राप तस्यराज्ञःपुण्यंभगवत्क
थाश्रयंआख्यानंकथय सूतउवाच हेशौनक युष्मत्पादसेवयावयंविलोमजाअपिधन्याःस्म यतःसाधूनांनामयोगः
लौकिकोपिभाषणरूपःसंबंधः दुष्कुलत्वनिमित्तांमनःपीडांअपनयति अहोपुनःअनंतस्यनामगृणतःपुंसःदौष्कुल्यंअपनय
तीतिकिंवक्तव्यम् किंच ब्रह्मादीन्हित्वालक्ष्मीः यत्पादरेणुंसेवते एवंभूतस्यभगवतः एतावतामाहात्म्यसूचनेन अलम् अ
थापियत्पादांगुष्ठनिर्गतंगंगारूपंजलंसेशंजगत्पुनाति तस्मात् भगवतःकोनामलोकेश्रेष्ठोस्ति किंच यत्रईश्वरेप्रीतिंकुर्वंतःपु
रुषाःदेहादिषुसंगंहित्वापरंपदंयांति इत्युक्त्वाख्यानमाह हेऋषयःभवद्भिःपृष्टोहंयथामति आख्यानंप्रवक्ष्यामि यथापक्षि
णःस्वशक्त्यनुरूपंनभःगच्छंति नसर्वं तथाविद्वांसोपियथामतिविष्णुलीलांवदंति अथएकदापरीक्षित्मृगयांकर्तुंवनेगतः

तत्रमृगान् अनुगतःसन् श्रांतःक्षुधितः तृषितःजलं अपश्यन् ऋष्याश्रमंविवेश तत्रमीलिताक्षंसमाधौस्थितंरुरुचर्मणाआच्छन्नं
शमीकंमुनिंदृष्ट्वा उदकं अयाचत ततःअप्राप्तसत्कारः राजाआत्मानंअवज्ञातमिवमत्वामत्सरयुतःसन् चुकोप ततःक्रुद्धोराजाऋ
षेःस्कंधेमृतसर्पंधनुष्कोट्यानिधायपुरंययौ यतःअस्यऋषेःसमाधिःसत्यःमिथ्यावाइतिजिज्ञासयासर्पःस्थापितः ततःतस्यपु
त्रःशृंगीनामबालकैःसहक्रीडन्सन्राज्ञोऽपराधंश्रुत्वाबालकमध्येइदंअब्रवीत् अहोराज्ञांअधर्मःअयम् काकानामिव किंच
ब्राह्मणैःक्षत्रियःद्वारपालःनिरूपितःसःतद्गृहस्थंसर्वं भोक्तुंकथमर्हति किंच अधर्मवर्तिनांशास्तरिश्रीकृष्णेदूरंगतेसतितन
द्भिन्नसेतून् अद्याहंशास्मिपश्यतमेबलम् इत्युक्त्वाक्रोधताम्राक्षःशृंगीकौशिक्याउदकं आचम्यशापंविससर्ज एवंलंघित
मर्यादंतक्षकःसप्तमेहनिभक्षयिष्यति ततःस्वाश्रमंएत्यसर्पयुतंपितरंदृष्ट्वारुरोदशमीकःपुत्रविलापंश्रुत्वानेत्रेउन्मील्यस्वां
सेमृतसर्पंच दृष्ट्वातंविसृज्यपुत्रंपप्रच्छ हेवत्स कस्मात्त्वंरोदिषिकेनतेअपराधः कृतः ततःपुत्रःसर्वंन्यवेदयत् ततःशापंश्रु
त्वा मुनिरुवाच हेपुत्रत्वयाभद्रंनकृतम् स्वल्पापराधेमहान्दंडः कृतःकिंच यस्यराज्ञःप्रभावेनप्रजाःसुखंविंदंति तस्मिन्राज्ञिमृ
तेसति अयंलोकःचोरादिभिःनंक्ष्यति अस्माकंचअधर्मःस्यात् सद्धर्मोनंक्ष्यति वर्णसंकरोभवेत् किंच अयंराजाअस्मत्तःशापंना
र्हति किंच अपक्वबुद्धिनाबालेनमहाभागवतेराज्ञिपापंकृतंतत् भगवान्क्षंतुमर्हति किंच एवंभूताःभागवताःअपराधकर्तुःप्र
तिशापंनकुर्वंति इतिअनुतप्तोमुनिःराज्ञाकृतंअपराधंनाचिंतयत् किंच अस्मिन्लोकेसुखदुःखादिषुअन्यैःयोजिताअपिसाध
वःनव्यथंतिनहृष्यंति इत्युक्त्वाराज्ञेशिष्यंप्राहिणोत् ५० इतिप्रथमेऽष्टादशः १८ सूतउवाच अथराजास्वकृतंगर्ह्यं १५
कर्मचिंतयन्आह अहोनिरागसिब्राह्मणेमयाअपराधःकृतःअतःमेअचिरात् अपराधजंव्यसनंभवतु यथापुनःएवंनकुर्याम्

किंच ब्रह्मकोपोत्थितोऽग्निः मेसमृद्धं राज्यादिकं दहतु इत्थं चिंतयन् सराजा शमीकप्रेषितशिष्यमुखेन तक्षकात् मृत्युंश्रुत्वा साधु मेने अथ कृष्णांघ्रिसेवां अधिकं मन्यमानः राजा भगवच्चरणनिर्गतायां गंगायां प्रायोपवेशं कृतवान् तत्र मुक्तसमस्तसंगः सन् मुकुंदांघ्रिं दध्यौ एतस्मिन्नंतरे तद्दर्शनार्थं सशिष्याः मुनयः प्राप्ताः तेच अत्रिः वसिष्ठः च्यवनः शरद्वान् अरिष्टनेमिः भृगुः अंगिराः पराशरः विश्वामित्रः परशुरामः उतथ्यः इंद्रप्रमदः इध्मवाहः मेधातिथिः देवलः आर्ष्टिषेणः भारद्वाजः गौतमः पिप्पलादः मैत्रेयः और्वः कवषः अगस्तिः व्यासः नारदः अन्येच राजर्षिदेवर्षिब्रह्मर्षयः एतान् सर्वान् अभ्यर्च्य राजा ववंदे ततः सुखोपविष्टेषु तेषु पुनः प्रणम्य अंजलिंबध्वा स्वचिकीर्षितं विज्ञापयामास राजोवाच अहो वयं भवद्भिः अनुगृहीताः अत एव धन्याः आस्तां तावदनुग्रहः ब्रह्मशापोपि अनुग्रहाय भवति यतः पापात्मनः गृहेषु आसक्तचित्तस्य मे स्वरूपप्राप्तये भगवान् द्विजशापतया बभूव यस्मिन् शापे सति अयं निर्विण्णो भवति हे विप्राः ईशे धृतचित्तं शरणागतं मां जानंतु द्विजेरितः तक्षकः अलं दशतु परंतु विष्णुगाथाः गायत किंच अहं यांयां सृष्टिं उपयामि तस्यांतस्यां पुनः भगवद्रतिः साधुसंगश्च अस्तु वः द्विजेभ्यो नमः राजा इति निश्चययुक्तः पृथ्व्याः स्वसुते न्यस्तभारः सन् गंगायाः दक्षिणकूले प्रागग्रकुशेषु उदङ्मुखः आस्ते स्म एवं राज्ञि प्रायोपविष्टे सति देवाः पुष्पवृष्टिं चक्रुः मुहुः दुंदुभयश्च नेदुः महर्षयः साधुसाध्विति प्रशस्य अनुमोदमानाः संतः ऊचुः हे राजर्षिवर्य श्रीकृष्णभक्तेषु भवत्सु इदं चित्रं न ये भगवत्सार्ष्टिकामाः राजासनं जहुः किंच असौ राजा देहं विहाय विशोकं परलोकं यावत् यास्यति तावद्वयं सर्वे इह स्थास्यामः परीक्षित् तत् ऋषिगणवचः आश्रुत्य तान् अभिवंद्य विष्णोश्चरितानि शुश्रूषमाणः सन् आभाषत यूयं सर्वे अत्रागताः युष्माकं इह परत्र च परानुग्रहं विना अर्थो नास्ति अतः वः इमं प्रष्टव्यं पृच्छे हे विप्राः यूयं एकमतयः संतः सर्वावस्थासु

म्रियमाणैश्च यत्कृतं तद्विचारयत ततः तेषु यागयोगतपोदानादिभिर्विवदमानेषु सत्सु यदृच्छयागां पर्यटन् स्त्रीबालैर्वृतः अ
वधूतवेषः निजलाभतुष्टः व्यासपुत्रः तत्र प्राप्तः तं षोडशवर्षं सुकुमारपादाद्यवयवं चारुनेत्रं उन्नतनासं तुल्यकर्णं सुभ्र्वाननं
कंबुकंठं निगूढजत्रुं पृथुवक्षसं दिगंबरं वक्रविकीर्णकेशं प्रलंबबाहुं स्वमरोत्तमाभं श्यामं गूढवर्चसमपि शुकं दृष्ट्वा तल्लक्ष-
णज्ञाः मुनयः आसनेभ्यः प्रत्युत्थिताः ततः परीक्षित् आगताय तस्मै शिरसा सपर्यामाजहार ततः स्त्रियोऽर्भकाः निवृत्ताः सः पूजि
तः सन् महासने उपविवेश सः देवर्षिराजर्षिब्रह्मर्षिसंघैः संवृतः चंद्रइव व्यरोचत ततः परीक्षित् आसीनं तं मूर्ध्ना प्रणम्य सूनृ
तया गिरा अन्वपृच्छत् अहो वयं क्षत्रबंधवः भवद्भिः कृपया योग्याः कृताः येषां वः स्मरणात् पुंसां गृहाः सद्यः शुद्ध्यंति किंपुनः
दर्शनादिभिः शुद्ध्यंतीति वक्तव्यम् हे योगिन् ते सान्निध्यात् पुंसां महापापान्यपि सद्यः नश्यंति विष्णुसान्निध्यात् दैत्या
यथा पांडवानां प्रियः कृष्णः तत्प्रीत्यर्थं तज्ज्ञोऽत्रस्य मे प्रीतिः खलु अन्यथा म्रियमाणानां नः ते दर्शनं कथं स्यात् अतः योगिनां
गुरुं त्वां पृच्छामि इह म्रियमाणस्य यत्कार्यं यच्छ्रोतव्यं जाप्यं स्मर्तव्यं भजनीयं ब्रूहि विपर्ययं च ब्रूहि यतः तव अवस्थानं गृ
हाश्रमिणां गृहेषु गोदोहनकालमपि न लक्ष्यते सूत उवाच राज्ञा एवं पृष्टः धर्मज्ञो भगवान् शुकः प्रत्यभाषत ४० इ
ति श्रीमद्भागवते प्रथमस्कंधे चूर्णिकायां एकोनविंशोऽध्यायः १९ ७ अयं स्कंधः समाप्तः श्रीकृष्णार्पणमस्तु
शुभं भवतु ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

ओ॰ ९ अश्रोतव्यादि॰